# मार्कण्डेयपुराण

जिसमें

अस्सी अध्यायके उपरान्त श्री भगवती का स्तोत्र है

जिसका प्रति अक्षर मन्त्र शास्त्र से भराहुवा है

तीसरीवार

مارکنڈے پوران

लखनऊ

मुन्शी नवलकिशोर के छापेखाने में छपा

अक्तूबर सन् १८८०ई०

श्रीगणेशाय नमः॥ यात्या ऽयं जगत्सर्वं शक्तिः सर्वत्र पूज्यते ॥ गुणानां समतावस्था प्रमाणैरभिधीयते १ काल वेग गुणादाय परिणामं प्रपद्यते ॥ सानित्यासा महानात्मा तामा हुस्त्वं तला दयः २ महत्तत्वं ततो जात महंकार समुद्भवः तन्मात्राः पंच भूतानि तत एव भवंतिहि ३ एवं क्रमेण सृष्टेः सा कर्त्री चित्तत्त्व रूपिणी । तदंशा सत्व संभूतं ज्ञानं कैवल्य कारणम् ४ विशिष्टा हेत बुद्धिर्हि मतेषु प्रबला मता । नगुणेन विना संस्था गुणिनस्तु कथंचन ५ तदंश शक्ति रहिता ब्रह्म विष्णु शिवादयः । स्पंदनेप्य समर्थाः स्युश्चिन्त्युताः प्रभविष्णवः ६ तस्मा तद्भक्ति प्रवणं चित्तं कार्यं शुभार्थिभिः । यया रोगवर्ध्य लाभश्च तत एव भविष्यति ७ तद्भक्त्य हृष्ट धार्मिक कोशले देश उत्तमे । पंडे श्री हरसदत्तस्तुबभूव गुणि नांवरः ८ कांत्या चन्द्र समः क्षांतौ धरित्री सदृशो मतः । धनदेन समः त्यागे गांभीर्ये सागरोपमः ९ बुद्ध्या वाचस्पति समो रूपे कंदर्प कोऽपरः । दयावान् ख्यात कीर्तिश्च साधूनां पर्युपासकः १० एव मेव गुणोर्युक्तः तथा सेर बहादुरः यशोयंशः प्रतापाभ्यां पूरितं धरणी तलम् ११ मुन्शी नवल पूर्वेण किशोरेण च संगतौ । यः क्षत्रिय कुले जातः स्वा श्रयाणां च पालकः १२ सर्व संपत्समाक्रान्त उदार चरितश्चयः । तद्गुण ग्राम कथनं नेत्यंत कविवाणपि १३ तेषां गोष्ठ्याम भूद्वार्ता देवी माहात्म्य सूचिका । ताभ्यांस प्रार्थितो मुन्शी मार्कण्डेयस्य मुद्रणे १४ रतिज्ञां तचनिः कर्ये मार्कण्डे यस्य मुद्रणम् । तत्प्रतिज्ञा भृतां कर्तुं मुद्यतो ग्रन्थ मुद्रणे १५ मार्कण्डेयं पुराणानां श्रेष्ठ मुनि गणैः स्मृतम् धर्मार्थ काम मोक्षाणां सिद्धिः श्रवणतो भवेत् १६ यस्मिन्पुराणे लेशेन देवी माहात्म्य वर्णनम् । तत्सस्य वाच्य तां नेतुं नैव शक्ताः सुरादयः १७ मुद्रणस्य निदानंतु शोधनं परि कीर्तितम् । तद्विना मुद्रित मपि लोकेन प्रसरेदिति १८ तदल्पज्ञ कृतं नैव विद्वत्संतोष कारकम् ॥ इति चिन्ता समुद्भूता मुद्रणाधीश्वरे वरे १९ तदुःखं साय तदा तस्य बुद्धिर्जाता महात्मनः । जीव राघव नामाज्ञः शास्त्री संप्रति वर्तते २० तदा यत्नं कृतं तेन शोधनं लक्ष्मणीय के । पुरे वाणांग वह्नि न्दु वत्सरे चैत्र संज्ञके २१ पद वाक्य प्रमाणानां पारगो नच शोधितम् । मुद्रितंच ततस्तेन पुराणं सप्तमं शुभम् २२ ब्यासे नोक्तं सदाधाय चित्तं ब्रह्मणि निर्मले । देवी तेजः प्रभावेण लोके ग्रन्थः सदा चरे दिति २३ ॥ इति ॥

श्री गणेशाय नमः मार्कण्डेय पुराणं श्रीं नमो भगवते वासुदेवाय यद्योगि भिर्भव भयार्ति विनाश योग्य मासाद्य
वन्दितम तीव विविक्त चित्तैः तद्वः पुनातु हरि पाद सरोज युग्ममा दिर्भवत् क्रम विलङ्घित भूर्भुवःस्वः पायात्।
स वः सकल कल्मष भेद दक्षः क्षीरोद कुक्षि फणि भोग निविष्ट मूर्तिः श्वासाव धूत सलिलोत्कलिका करालः
सिन्धुः प्रनृत्य मिव यस्य करोति सङ्गात् २ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं देवीं सरस्वतीं च ततो जय मुदी-
रयेत ३ तपः स्वाध्याय निरतं मार्कण्डेयं महा मुनिं व्यास शिष्यो महा तेजा जैमिनिः पर्यपृच्छत १ भगवन्
भारता ख्यानं व्यासे नोक्तं महात्मना पूर्ण मस्त मलैः शुभैर्नाना शास्त्र समुच्चयैः २ जाति शुद्ध समायुक्तं साधु
शब्दोप शोभितं पूर्व पक्षोक्ति सिद्धान्त परि निष्ठ समन्वितं ३ त्रिदशानां यथा विष्णु र्द्विपदां ब्राह्मणो यथा भूषणा
नाञ्च सर्वेषां यथा चूडामणिर्वरः ४ यथा युधानां कुलिश मिन्द्रियाणां यथा मनः तथेह सर्व शास्त्राणां महा
भारत मुत्तमं ५ अत्रार्थश्चैव धर्मश्च कामो मोक्षश्च वर्ण्यते परस्परानु बन्धाश्च सानु बन्धाश्च ते पृथक् ६ धर्म
शास्त्र मिदं श्रेष्ठ मर्थ शास्त्र मिदं परं काम शास्त्र मिदं चाग्र्यं मोक्ष शास्त्रं तथोत्तमं ७ चतुराश्रम धर्माणा माचार
स्थिति साधनं प्रोक्त मेतन्महा भाग वेद व्यासेन धीमता ८ तथा तात कृतं ह्येत द्व्यासेनोदार कर्मणा यथा व्याप्तं
महा शास्त्रं विरोधैर्नाभि भूयते ९ व्यास वाक्य जलौ घेन कुतर्क तरु हारिणा वेद शैलाव तीर्णेन नीरजस्का मही
कृता १० कल शब्द महा हंसं महा ख्यान पराम्बुजं कथा विस्तीर्ण सलिलं कार्ष्णं वेदं महाह्रदं ११ तदिदं भारता
ख्यानं बह्वर्थं श्रुति विस्तरं तत्त्व तो ज्ञातु कामोहं भगवंस्त्वा मुपस्थितः १२ कस्मान्मानुष तां प्राप्तो निर्गुणोऽपि
जनार्दनः वासुदेवो जग त्सृति स्थिति संयम कारणं १३ कस्माच्च पाण्डु पुत्राणा मेकासा द्रुपदात्मजा पञ्चानां
महिषी कृष्णा ह्यत्र नः संशयो महान् १४ भेषजं ब्रह्म हत्याया बलदेवो महा बलः तीर्थ यात्रा प्रसङ्गेन कस्माच्चके
हलायुधः ॥ कथञ्च द्रौपदेयास्ते ऽकृत दारा महा रथाः पाण्डु नाथा महात्मानो वधमा पुरनाथवत् १६ एतत्
सर्वं विस्तरं शीत्रमा ख्यातु मिहार्हसि भवन्तो मूढ बुद्धीना मव बोध कराः सदा १७ इति तस्य वचः श्रुत्वा मार्कण्डे-
यो महा मुनिः दशाष्ट दोष रहितो वक्तु समुप चक्रमे १८ मार्कण्डेय उवाच क्रिया कालोऽयमस्माकं सं प्राप्तो मुनि

सत्तमं विस्तरे चापि वक्तव्ये नैष कालः प्रशास्यते १९ येतु वक्ष्यन्ति वक्षोऽयतानहं जैमिने तव तथा च नष्ट सन्देहं
त्वां करिष्यन्ति पक्षिणः २० पिङ्गाक्षश्च विबोधश्च सुपुत्रः सुमुखस्तथा द्रोणा पुत्राः खग श्रेष्ठा स्तत्त्वज्ञाः
शास्त्र चिन्तकाः २१ वेद शास्त्रार्थ विज्ञाने येषा मव्या हता मतिः विंध्य कन्दर मध्यस्था स्तानु पास्यच पृच्छाच
२२ एव मुक्त स्तदा तेनं मार्कण्डेयेन धीमता प्रत्यु वाचर्षि शार्दूलो विस्मयो गन्न लोचनः २३ जैमिनिरुवाच
अत्य द्भुत मिदं ब्रह्मन् खगवा गिंव मानुषी यत पक्षिणा स्ते विज्ञान मापुरत्यन्त दुर्लभम् २४ तिर्यग्योन्यां यदि भव-
स्तेषां ज्ञानं कुतोऽभवत् कथञ्च द्रोण तनयाः प्रोच्यन्ते तेप तत्रिणः २५ कश्चद्रो णः प्रविख्यातो यस्य पुत्र चतु-
ष्टयं जाते गुणावतान्तेषां धर्म ज्ञानं महात्मनां २६ मार्कण्डेय उवाच शृणुष्वा वहित भूत्वा यद्वृत्तं नन्दने पुरा शक्र-
स्या प्सरसाञ्चैव नारदस्य च सङ्गमे २७ नारदो नन्दनेऽपश्यत् पुंश्चली गणा मध्यगं शक्रं सुराधि राजानं तन्मुखा-
सक्त लोचनं २८ मुनेनर्षि वरिष्ठेन दृष्ट मात्रः शचीपतिः समुत्तस्थौ स्वयञ्चास्मैस्वं दत्ते वान मादरात् २९ तंदृष्ट्वावल
वृत्रघ्न मुत्थितं त्रि दशाङ्गनाः प्रणेमुस्ताश्च देवर्षिं विनया वनताः स्थिताः ३० ताभिरभ्यर्चितः सोऽथ उप विष्टे
शतक्रतौ यथार्ह कृत संभाषः कथाश्चक्रे मनोरमाः ३१ ततः कथान्तरे शक्र स्तमुवाच महामुने शक्र उवाच देह्याज्ञां
नृत्य ता मासां तव याभि मते प्रिये ३२ रम्भावा कर्कशावाथ उर्वश्यथ तिलोत्तमा घृताची मेनका वापि यत्रवा भवतो
रुचिः ३३ एत च्छ्रुत्वा द्विज श्रेष्ठो वाचं शक्रस्य नारदः विचिन्त्या प्सरसः प्राह विनया वनता गता: ३४ युष्मा-
कं मिह सर्वासां रूपौ दार्य गुणाधिकं आत्मानं मन्यते यातु सा नृत्यतु ममाग्रतः ३५ गुणरूप विहीनायाः सिद्धि
र्नाट्यस्य नास्तिवै चार्व धिष्ठानवन्नृत्यं नृत्य मन्य द्विडम्बनं ३६ मार्कण्डेय उवाच तद्वाक्य सम नन्तरं एकैका
स्तानता स्ततः अहं गुणाधिका नत्वं नत्वं चान्या ब्रवीदिदं ३७ तासां संभ्रम मालोक्य भगवान् पाकशासनः
पृच्छ्यतां मुनि रित्याह वक्ताया वो गुणाधिका ३८ शक्र च्छन्दानु यताभिः पृष्टस्ताभिः स नारदः यत्तदा
वाक्यं जैमिने तन्निबोधमे ३९ तपस्यन्तं नगेन्द्र स्थं याव: क्षोभयतेव लात् दुर्वाससं मुनिं श्रेष्ठं तांवो मन्ये गुणाधिकां ४०
मार्कण्डेय उवाच तस्य तद्वचनं श्रुत्वा सर्व्वा वेपित कन्धराः अशक्य मे तदस्माक मिति ताश्चक्रिरे कथाः ४१ तत्राप्स-

शवपु र्नाम मुनिक्षोभरागर्व्विता प्रत्युवाचानुयास्यामि यत्रासौ संस्थितो मुनिः ४२ अद्य तं देह यन्तारं प्रयुक्ते विबानि
नं स्मर शास्त्र गलद्रश्मिं करिष्यामि कुसारथिं ४३ ब्रह्मा जनार्दनो वापि यदि वा नील लोहितः तमप्यद्य करो मि काम
वाणा सतान्तरं ४४ इत्युक्त्वा प्रजगा माथ प्राले याद्रिव पुस्तदा मुनेस्त पः प्रभावेण प्रशान्त श्वापदा श्रयं ४५ साप्युंस्कोकिल माधुर्य्यं यत्रास्ते समहा मुनिः क्रोश मात्रं स्थिता तस्माद गायत वराप्सराः ४६ तद्गीत ध्वनि मार्क सुनि र्विस्मित मानसः जगाम तत्र यत्रास्ते सा वाला रुचिराननना ४७ तां दृष्ट्वा चारु सर्व्वाङ्गीं मुनिः संस्तभ्य मान सोभरणा यागतं ज्ञात्वा कोपामर्ष समन्वितः ४८ उवाच दन्त तो वाक्यं महर्षि स्तां महा तपाः ४९ यस्मा दुः खार्जित पसो विघ्न कारणात् आगतासि मदोन्मत्ते मम दुः खाय खेचरि ५० तस्मात् सुपर्ण गोत्रे त्व मत् क्रोध कलुषी ता जन्म प्राप्स्यसि दुष्प्रज्ञे यावद्वर्षाणि षोडश ५१ निज रूपं परित्यज्य पक्षिणी रूप धारिणी चत्वारस्ते च तनर्गनिष्यन्ते ऽधमाप्सरः
५२ अप्राप्य तेषु च प्रीतिं शस्त्र पूता पुनर्दिवि वासमाप्स्य सि वक्तव्यन्तोत्तरन्ते कथञ्चन ५३ ति वचनम सह्यं कोपसंरक्त दृष्टि प्रचल कलवल यान्ता मानिनी श्राव यित्वा तरल तल तरङ्गं गां परित्यज्य विप्र थित गुण गणौ घं संप्रयातः स्वगङ्गा ५५ इति मार्कण्डेय पुराणे वपु प्राप्यः प्रथमः ॥ १ ॥ मार्कण्डेय उवाच रिष्टनेमि पुत्रोऽभूत्कण्डे प्रो वायु विक्रमः सुपर्णवे नाम पक्षिराट् गरुडस्या भवत् पुत्रः सम्पातिरिति विश्रुतः १ तस्या प्यासीत् सुतः शूरः कङ्कः कैलाश शिखरे विद्युद्रूप तनयः कुन्तिः कुन्ति पुत्रः प्रलोलुपः २ तस्यापि तनया वास्तां कङ्कः कन्धरसवच ३ कङ्कः वारिणी भार्य्या सहायमासीनं शितिवि श्रुतं ददर्शाम्बुज पत्राक्षं राक्ष सं धनदानुगं ४ आयाना सत्त ममल स्त्र ग्दामाम्बर त्वमितो ह्यगाडजाधम ६ स्त्री ला पहे ऽमले शुभे ५ तद्दृष्ट मात्रे कङ्केन रक्षः क्रोध समन्वितं प्रोवाच कस्मा ऽथ कङ्क उवाच ॥ साधारणो ऽयं शैलेन्द्रो यथा तव तथा मम अन्येषा ञ्चैव जन्तूनां ममता भवतो ऽत्र का मार्कण्डेय उवाच ॥ ब्रुवाणमित्थं खड्गेन कङ्कं चिच्छेद राक्षसः क्षरत्क्षतज वी भत्सं विस्फुरन्त मचेतनं ९ कङ्कं विनिहतं श्रुत्वा कन्धरः क्रोध मूर्छितः विद्युद्रूप वधा श्रा शुमन श्चक्रे खगेश्वरः १० सगत्वा शैल शिखरं कङ्को यत्र हतः स्थितः तस्य सं कलनं ज्येष्ठ भ्रातुर्य्येष्ठस्य खेचर

मार्जारादभयं यत्र नैवा मराडज जन्तनां प्रधेमतो नकुलाद्वापि स्थाप्यन्तां तत्र पक्षिणाः ६० द्विजाः किंवातियत्नेन मार्य्य
न्ते कर्मभिः स्वकैः रक्ष्यन्ते चाखिला जीवा यथैते पक्षिबालकाः ६१ तथापि यत्नः कर्त्तव्योनेरैः सर्व्वेषु कर्मसु कुर्व्वन्
पुरुष कारन्तु वाच्यतां याति नो सतां ६२ इति मुनिवर चोदितास्त तस्ते मुनि तनयाः परिगृह्य पक्षिणस्तान् तरु विट
प समाश्रितालि संघं ययुरथ तापस रम्य माश्रमं स्वं ६३ सचापि वन्यं मनसाभिका मितं प्रगृह्य मूलं कुसुमं फलं कुशा
न् चकार चक्रा युध रुद्र वेधसां सुरेन्द्र वैवस्वत जात वेदसां ६४ अपास्य ते गोप्यति वित्त रक्ष्णोऽस्तु मीरणस्यापि तथा
द्विजोत्तमः धातुर्विधातुस्त्वथ वैश्व देविकाः श्रुति प्रयुक्ता विविधास्तु सत्क्रियाः ६५ इति मार्कराडेय पुराणे पक्ष्युत्प
त्तिर्द्वितीयः २ मार्कराडेय उवाच अहन्य हनि विप्रेन्द्र सतेषां मुनिसत्तम चकाराहार पयसा तथा गुप्त्याच्च पोषणं ॥१॥
मास मात्रेण जग्मुस्ते भानोः स्यन्दन वर्त्मनि कौतूहल विलोलाक्षैर्दृष्टा मुनि कुमारकैः २ दृष्टा महीं स नगरां साब्धो नि
धि सरिद्वरां रथ चक्र समाकाशे पुनराश्रम मागताः ३ श्रम क्लान्तान्तरात्मानो महात्मानो वियोनिजाः ज्ञानं च प्रकटी
भूतं तत्र तेषां प्रभावतः ४ ऋषेः शिष्यानु कम्पार्थं वदतो धर्म्म निश्चयं कृत्वा प्रदक्षिणं सर्व्वे चरणावभ्यवादयन् ५
ऊचुश्च मरणाद्घोरान्मोक्षिताः स्मस्त्वया मुने आवास भक्ष्य पयसां त्वं नो दाता पिता गुरुः ६ गर्भस्थानां मृता माता पि
त्रा नैवापि पालिताः त्वयानो जीवितं दत्तं शिशावोयेन रक्षिताः ७ क्षितावसत तेजास्त्वं क्रमीराणमिव शुष्यतां गज घराटां
समुत्पाट्य कृत वान् दुःख रेचनं ८ कथं वर्द्धे युर वलाः ख स्थान् द्रक्ष्याम्यहं कदा कदा भूमेर्द्रुमं प्राप्तान् द्रक्ष्ये वृक्षान्तरं
गतान् ९ कदा मे सहजा कान्तिः पांशुना नाश मेष्यति एषां पक्षानि लोल्येन मत्समीप विचारिणां १० इति चिन्तयता
तात भवता प्रति पालिताः तेसाम्प्रतं प्रवृद्धाः स्मः प्रबुद्धा करवाम किं ११ इत्यृषि र्वचनं तेषां श्रुत्वा संस्कारवत् स्फुटं ॥
शिष्यैः परिवृतः सर्व्वैः सह पुत्रेण शृङ्गिणा १२ कौतूहल परो भूत्वा रोमाञ्च पट संवृतः उवाच तत्वतो ब्रूत प्रवृत्तेः ॥
कारणं गिरः १३ कस्य शापादियं प्राप्ता भवद्भिर्विक्रिया परा रूपस्य वच सश्चैव तन्मे वक्तुमिहार्हथ १४ पक्षिणऊचु
विपुल स्वाननि तिख्यात आसीन्मुनि सत्तमः तस्य पुत्र द्वयं जज्ञे सुकृषस्तु म्बुरुस्तथा १५ सुकृ षस्य वयं पुत्राश्चत्वारः
संयतात्मनः तस्यैव विनया चार भक्ति नम्राः सदैवहि १६ तप प्रचरणा शक्तस्य शास्य मानेन्द्रिय स्यच यथाभि मत ॥

मस्माभिस्तदा तस्यो पपा दितं १७ समि त्पुष्पादिकं सर्व्वं यच्चे वाभ्यव हारिकं एवं तत्रार्थं वसतो तस्यास्सा कञ्चन का-
नने १८ आजगाम महा वर्ष्मा भग्न पक्षो जरान्वित: आताम्र नेत्र: स्रस्तात्मा पक्षी भूत्वा सुरेश्वर: १९ सत्य शौच
क्षमा चार मती वो दारमा नसं जिज्ञासुस्त मृषि श्रेष्ठ मस्म च्छाप भवायच २० पक्ष्युवाच द्विजेन्द्र मां क्षुधा विष्टं परि-
त्रातु मिहार्हसि भस्यार्थी महाभाग गति र्भव ममा तुला २१ विन्ध्यस्य शिखरे तिष्ठन् पत्रि पत्रे रितेनवे पतितो ॥
ऽस्मि महा भागश्च सने नाति रंहसा २२ सोहं मोह समा विष्टो भूमौ सप्ताह मस्मृति: स्थित स्तत्राष्टमे नाह्ना चेतनां ॥
प्राप्तवानहं २३ प्राप्त चेता: क्षुधा विष्टो भवन्तं शरणं गत: भस्यार्थी विगतानन्दो दूय मानेन चेतसा २४ तत् कुरु-
ष्वाम लमते मत् त्राणाय चलां मतिं प्रयच्छ भक्ष्यं विप्रर्षे प्राणा यात्रा समं मम २५ सएव मुक्त: प्रोवाच तमिन्द्रं पक्षि
रूपिणं प्राण सन्धारणार्थाय दास्ये भक्ष्यं त वेप्सितं २६ इत्युक्त्वा पुन रप्येन म पृच्छत्स द्विजोत्तम: आहार: कस्त
वार्थाय उपकल्प्यो भवन्स या सवाह नर मांसेन तृप्तिर्भवति मे परा २७ ऋषिरुवाच कौमारं तेव्यति क्रान्त मतीतं ॥
यौवनञ्चते वयस: परिणामस्ते वर्त्ततेनून मराडज २८ यस्मिन्न राणां सर्वेषाम शेषेच्छानि वर्त्तते सकस्मादद्य ॥
भावेऽपि सुनृशंसात्मकोः भवान् २९ क्व मानुषस्य पिशितं क्व वयश्चरमं तव सर्वथा दुष्ट भावानां प्रशमो नोपप-
द्यते ३० अथवा किं मये तेन प्रोक्ते नास्ति प्रयोजनं प्रति श्रुत्य मदा देयमिति नो भावितं मन: ३१ इत्युक्त्वा तंस
विप्रेन्द्र स्तथेति कृत निश्चय: शीघ्र मस्मान् समाहूय गुणतो ऽनु प्रशस्यच उवाच सुब्ध हृदयो मुनि र्वाक्यं सुनिष्ठुरं
विनया वन तान् सर्व्वान् भक्ति युक्तान् कृताञ्जलीन् ३३ कृतात्मानो द्विज श्रेष्ठा ऋणेोयुक्ता मया सह जाते श्रेष्ठम
पत्यं वो यूयं मम यथा द्विजा: ३४ गुरु: पूज्यो यदि मतो भवतां परम: पिता तत: कुरुतमे वाक्यं निर्व्यलीकेन चेत-
सा ३५ तद्वाक्य सम कालंच प्रोक्त मस्मा भिरा दृते: यद्व क्ष्यति भवांस्तं हि कृत मेवाव धार्य्यतां ३६ ऋषिरुवाच
मामेष शरणं प्राप्तो विहंग: क्षु त्तृषान्वित: युष्मन्मां सेन येनास्य सद्य स्तृप्ति र्भवेत्तवे ३७ तस्मा त्क्षयश्च रक्तेन तथा
शीघ्रं विधीयतां ततो वयं प्रव्यथिता: प्रकम्पो द्भूत साध्वसा: कष्टं कष्ट मिति प्रोच्य नैतत् कुर्मेति चाब्रुवन् ३८ कथं
पर शरीरस्य हेतोर्देहं स्वकं बुध: विना शयेद्ध्घातयेद्वा यथा ह्यात्मा तथा सुत: ३९ पितृ देव मनुष्याणां यान्युक्तानि ॥

पृच्छेच १ इत्यृषेवं वचनं श्रुत्वा मार्कण्डेयस्य जैमिनिः जगाम विन्ध्य शिखरं यत्र ते धर्म पक्षिणः २ तन्त्वा सन्न भूतस्य च
शुश्राव पठतो ध्वनिं श्रुत्वाच विस्मया विष्ट श्चिन्तया मास जैमिनिः ३ स्थान सौष्टव सम्पन्नं जितश्वास म विभ्रमं वि-
स्पष्टम पदो यच्च पठ्यते द्विज सत्तमैः ४ वियोनि मपि संप्राप्तानेतान् मुनि कुमारकान् चित्रं मतदहं मन्येन जहाति सर-
स्वती ५ बन्धु वर्गस्तथा मित्रं यच्चेष्टम परं गृहे त्यक्त्वा गच्छति तत् सर्वन्न जहाति सरस्वती ६ इति संचिन्त्य यत्नेव वि-
श गिरि कन्दरं प्रविश्य च ददर्शा सौ शिला पट्ट गतान् द्विजान् ७ पठतस्तान् समा लोक्य मुख दोष विवर्जितान् सोऽथ
शोकेन हर्षेण सर्व्वान्न वाक्य माथन ८ स्वस्त्यस्तु वो द्विज श्रेष्ठा जैमिनिं मानि बोधत व्यास शिष्य मनु प्राप्तं भवतां दर्श-
नो त्सुकं ९ मन्युर्न खलु कर्त्तव्यो यत् पित्रा तीव मन्युना शप्ताः खगत्व मापन्नाः सर्व्वथा दिष्ट मेवतत् १० स्फीत द्र-
व्य कुले केचिज्जाताः किल मन स्विनः द्रव्य नाशे द्विजेन्द्राः ते शबरेण सुसान्त्विताः ११ दत्वा याचन्ति पुरुषा हत्वा
वध्यन्ति चापरे घात यित्वा च यात्यन्ते तएव तपसः क्षयात् १२ एत दृष्टं सुबहुशो विपरीतं तथा मया भावा भाव समु-
च्छेदै रजस्रं व्याकुलं जगत् १३ इति संचिन्त्य मनसा न शोकं कर्त्तु मर्हथ ज्ञानस्य फल मेताव च्छोक हर्षैर धृष्यता ॥ १४ ॥
ततस्ते जैमिनिं सर्व्वे पाद्याद्यैर्भ्याम पूजयन् अनामयञ्च प्रपच्छुः प्रणिपत्य महा मुनिं १५ अथोचुः खगाः सर्व्वे
व्यास शिष्यं तपो निधिं सुखोप विष्टं विश्रान्तं पक्षानि लहृत क्लमं १६ पक्षिण ऊचुः अद्यनः सफलं जन्म जीवितं च
सु जीवितं यत् पश्यामः सुरैर्वन्द्यं तव पादाम्बुज द्वयं १७ पितृ कोपाग्नि रुद्धूतो योनो देहेषु वर्त्तते सोद्य शान्तिं गतो
विप्र युष्म द्दर्शन वारिणा १८ कच्चित्ते कुशलं ब्रह्म न्नाश्रमे मृग पक्षिषु वृक्षेष्वथ लता गुल्म त्वक् सार तृण जातिषु १९
अथवा नैत दुक्तंहि सम्य गस्माभि राहते भवता संग मो येषां तेषाम कुशलं कुतः २० प्रसादञ्च कुरुष्वात्र वृह्यागमन
कारणं देवानामिव संसर्गो भवतो ऽभ्यु दयो महान् केनास्मद्भाग्य गुरुणा आनीतो दृष्टि गोचरं २१ जैमिनिरुवाच
श्रूयतां द्विज शार्दूलाः कारणं येन कन्दरं विन्ध्य स्येह गतो रम्यं रेवावारिकणो क्षितं सन्देहा भारते शास्त्रे तान् प्रष्टुं गत
वानहं २२ मार्कण्डेयं महात्मानं पूर्व्वं भृगु कुलोद्वहं तसहं पृष्टवान् प्राप्य सन्देहान् भारतं प्रति २३ स च पृष्टो मया
ब्रह्म सान्ति विन्ध्ये महा बले द्रोण पुत्रा महात्मान स्ते वक्ष्यन्त्यर्थ विस्तरं २४ तद्वाक्य चोदित श्चैम मागतो ऽहं महागिरिं

तत् शृणुध्वम शेषेण श्रुत्वा व्याख्यातुमर्हथ २५ पक्षिण ऊचुः विषये सति वक्ष्यामो निर्विशङ्काः शृणुष्वतत् कथं त-
न्नवदिष्यामो यदस्म द्बुद्धि गोचरं २६ चतुर्ष्वपिहि वेदेषु धर्म्मशास्त्रेषु चैवहि समस्तेषु तथाङ्गेषु यच्चान्यद्वेद सम्मितं
२७ एतेषु गोचरोऽस्माकं बुद्धेर्ब्राह्मण सत्तम प्रतिज्ञान्तु समारोढुं तथापि नहि शक्नुमः २८ तस्माद्वदस्व विश्रब्धं
सन्दिग्धं यद्धि भारते वक्ष्यामस्तव धर्म्मज्ञ नचेन्मोहो भविष्यति २९ जैमिनिरुवाच सन्दिग्धानीह वस्तूनि भारतं प्रति
यानिमे शृणुध्वमम तास्तानि श्रुत्वा व्याख्यातुमर्हथ ३० कस्मान्मानुषतां प्राप्तो निर्गुणोऽपि जनार्द्दनः वासुदेवोऽखि-
लाधारः सर्व्वकारण कारणं ३१ कस्माच्च पाण्डु पुत्त्राणामेका सा द्रुपदात्मजा पञ्चानां महिषी कृष्णा सुमहानत्र सं-
शयः ३२ भेषजं ब्रह्महत्याया बलदेवो महाबलः तीर्थयात्राप्रसङ्गेन कस्माच्चक्रे हलायुधः ३३ कथञ्च द्रौपदेया-
स्तेऽकृतदारा महारथाः पाण्डुनाथा महात्मानो वधमापुरनाथवत् ३४ एतत् सर्व्वं कथ्यतां मे सन्दिग्धं भारतं प्रति
कृतार्थोऽहं सुखं येन गच्छेयं निजमाश्रमं ३५ पक्षिण ऊचुः नमस्कृत्य सुरेशाय विष्णवे प्रभविष्णवे पुरुषायाप्रमे-
याय शाश्वतायाव्ययायच ३६ चतुर्व्व्यूहात्मने तस्मै त्रिगुणायागुणायच वरिष्ठाय गरिष्ठाय वरेण्यायामृतायचं ३७
यस्मादण्डतरन्नास्ति यस्मान्नास्ति बृहत्तरं येन विश्वमिदं व्याप्तमजेन जगदादिना ३८ आविर्भावतिरोभावदृष्टादृष्ट-
विलक्षणं वदन्ति यत् सृष्टमिदं तथैवान्ते च संहृतं ३९ ब्रह्मणे चादिदेवाय नमस्कृत्य समाधिना ऋक्सामान्युद्गिरन्व-
क्त्रैर्यः पुनाति जगत्त्रयं ४० प्रणिपत्य तथैशानमेकवाण विनिर्जितैः यस्या सुरगणैर्यज्ञा विलुप्यन्ते न यज्विनां ॥४१॥
प्रवक्ष्यामो मतं कृत्स्नं व्यासस्याद्भुत कर्म्मणः येनभारतमुद्दिश्य धर्म्माद्याः प्रकटीकृताः ४२ आपो नारा इति प्रोक्ता
मुनिभिस्तत्व दर्शिभिः अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः ४३ सदेवो भगवान् सर्व्वं व्याप्य नारायणो विभुः
चतुर्द्धा संस्थितो ब्रह्मन् सगुणो निर्गुणस्तथा ४४ एका मूर्त्तिरनिर्देश्या शुक्लां पश्यन्ति तां बुधाः ज्वालामालावनद्धा-
ङ्गी निष्ठा सा योगिनां परा ४५ दूरस्था चान्तिकस्थाच विज्ञेया सा गुणातिगा वासुदेवाभिधानोऽसौ निर्म्ममत्वेन
दृश्यते ४६ रूपवर्णादयस्तस्या न भावाः कल्पना मयाः अस्त्येव सा सदा शुद्धा सुप्रतिष्ठैकरूपिणी ४७ द्वितीया
पृथिवीं मूर्द्ध्ना शेषाख्या धारयत्यधः तामसी सा समाख्याता तिर्य्यक्त्वं समुपागता ४८ तृतीया कर्म्म कुरुते प्रजा-

पालन तत्परा सत्वो द्रिक्तानु शासिया धर्म संस्थान कारिणी ४९ चतुर्थी जल मध्यस्था शेते पन्नगतल्पगा रजस्त-
स्था गुणा : सर्गं सा करोति सदैवहि ५० या त्वतीया हरे र्मूर्ति : प्रजा पालन तत्परा सा तु धर्म व्यवस्थानं करोति नि-
यतं भुवि ५१ प्रोद्धूतानं सुरान् हन्ति धर्मं विच्छत्ति कारिणः पाति देवान् सत प्रचान्यान् धर्म रक्षा परायणान् ५२
यदा यदाहि धर्मस्य ग्लानि र्भवति जैमिनि अभ्युत्थानम धर्मस्य तदात्मानं सृजत्य सौ ५३ भूत्वा पुरावराहेण तुण्डे-
ना पो निरस्य च एकया दंष्ट्रयोत् खाता न लिनीवव सुंधरा ५४ कृत्वा नृसिंह रूपञ्च हिरण्य कशिपुर्हत : विप्रचित्ति
मुखा श्चान्ये दानवा विनि पातिता : ५५ वामनादी स्तथै वान्यान्न संख्यातु मिहो त्सहे अवताराँश्च तस्येह माथुर :
साम्प्रतं त्वयं ५६ इतिसा सात्त्विकी मूर्ति रवतारान् करोति वै प्रद्युम्ने तिच सारव्या ना रक्षा कर्मण्य वस्थिता ५७
देवत्वे ऽथ मनुष्यत्वे तिर्य्यग्योनौ च संस्थिता गृह्णाति तत्स्वभावञ्च वासुदेव च्छया सदा ५८ इत्येतत्ते समाख्यातं ।
कृते कृत्यो ऽपियत्प्रभु : मानुषत्वं गतो विष्णु : शृणुष्वास्यो त्तरं पुन : ५९ इति मार्कण्डेय पुराणे चतुर्व्यूहावतार :
४ पक्षिण ऊचु : त्वष्टु पुत्रे हते पूर्व्वं ब्रह्मन्निन्द्रस्य तेजस : ब्रह्म हत्याभि भूतस्य पराहानि रजायत तद्धर्मं स्वविवेशाथ शाक्रं
तेजो ऽपचारत : निस्तेजाश्चा भवच्छक्रो धर्मे तेजसि निर्गते २ तत : पुत्रं हतं श्रुत्वा त्वष्टा क्रुद्ध : प्रजापति : अवलु-
ञ्च्य जटामेकां मिदं वचनमब्रवीत् ३ अद्य पश्यन्तु मे वीर्य्यं त्रयो लोका : सदेवता : स च पश्यतु दुर्बुद्धि ब्रह्महा पाक
शासन : ४ स्वकर्मा भिरतो येन मत्सुतो विनिपातित : इत्युक्त्वा कोपरक्ताक्षो जटा मग्नौ जुहाव तां ५ ततो वृत्र : समु
त्तस्थौ ज्वाला माली महासुर : महाकायो महादंष्ट्रो भिन्नाञ्जन चय प्रभ : ६ इन्द्र शत्रु रमेयात्मा त्वष्टृ तेजो ऽपबृंहित :
अहन्य हनि सो ऽवर्द्धे दिषु पातं महाबल : ७ वधाय चात्मनो दृष्ट्वा वृत्रं शक्रो महासुर प्रेषया मास सप्तर्षीन् सन्धि मि-
च्छन् भयातुर : ८ सख्यञ्च कृतवां स्तस्य हर्षेण समयास्तथा ऋषय : प्रीत मनस : सर्व भूतहिते रता : ९ समय ।
स्थिति मुल्लङ्घ्य यदा शक्रेण घातित : वृत्र हत्याभि भूतस्य तदा वल मशीर्य्यत १० तच्छक्र देह विभ्रष्टं वलं मारुत ।
माविशत् सर्व्व व्यापिन मव्यक्तं वलस्यै वाधि दैवतं ११ अहल्याञ्च यदा शक्रो गौतमं रूपमा स्थित : धर्षया मास ।
देवेन्द्र स्तदारूप महीयत १२ अङ्ग प्रत्यङ्ग लावण्यं यदतीव मनोरमं विहाय दुष्टं देवेन्द्रं नासत्या वगमत्तत : १३ धर्मेण

पु.
२५

(१६६)

तेजसा त्यक्तो वलहीनस्स्वपि तां ज्ञात्वा सुरेशं दैत्येयास्तज्जये चक्रुरुद्यमं १४ सप्ता मुष्टिका वीर्य्यागां देवेन्द्रे विनि-
तेजसात्यक्तो वलहीनस्ववपिना ज्ञात्वा सुरेशं दैत्येया स्तज्जये चक्रुरुद्यमं १४ राज्ञा मुष्टिका वीर्य्यागां देवेन्द्रे विनि-
गीर्यव: कुलेष्वति दला दैत्या अजायन्त महामुने १५ कस्यचित्त्वथ कालस्य धरणी भारपीडिता जगाम मेरु गिरि-
स्वरं सदो यत्र दिवौकसां १६ तेषांसा कथयामास भूरिभाराव पीडिता दनुजात्मजदैत्योत्थं खेदकारणमात्मन: १७
एते भवद्भिरसुरा निहता: पृथुलौजस: ते सर्व्वे मानुषे लोके जाता गेहेषु भूभृतां १८ अक्षौहिण्योपि वहुलास्तज्ज्ञात्वा-
प्रजाम्यध: तथा कुरुध्वं त्रिदशा यथा शान्तिर्भवेन्मम १९ पार्सिरा ऊचु: तेजो भागैस्ततो देवा अवतेरुर्दिवो महीं प्र-
जानासुय कारार्थं भूभारहरणाय च २० यदिन्द्र देहजं तेजस्तन्मुमोच स्वयं हय: कुन्त्यां जातो महातेजास्ततो राजा यु-
धिष्ठिर: २१ वलं मुमोच पवनस्ततो भीमोव्य जायत शक्रवीर्य्यार्द्धतश्चैव जज्ञे पार्थो धनञ्जय: २२ उत्पन्नो यम-
जौ माद्र्यां शक्ररूपौ महाद्युती पञ्चधा भगवानित्थमवतीर्ण: शतक्रतु: २३ तस्योत्पन्ना महाभागा पत्नी कृष्णा हुता-
शनात् २४ शक्रस्यैव कस्य सापत्नी कृष्णा नान्यस्य कस्यचित् योगीश्वरा: शरीराणि कुर्व्वन्ति वहुलान्यपि २५
पञ्चानामेक पत्नीत्व मित्येतत कथितं तव श्रूयतां वलदेवोपि यथा यात: सरस्वतीं २६ इति मार्कण्डेय पुराणे
रुद्र विक्रिया. २ पक्षिण ऊचु: राम: पार्थे परां प्रीतिं ज्ञात्वा कृष्णस्य लाङ्गली चिन्तयामास वहुधा किं कृतं सु-
कृतं भवेत् १ कृष्णेन हि विना नाहं यास्ये दुर्य्योधनान्तिकं पाण्डवान् वा समाश्रित्य कथं दुर्य्योधनं नृपं ॥ २ ॥
जामातरं तथा शिष्यं घातयिष्ये नरेश्वरं तस्मात् पार्थं यास्यामि नापि दुर्य्योधनं नृपं ३ तीर्थेष्वाप्लावयिष्यामि
ताव दात्मानमात्मना कुरूणां पाण्डवानाञ्च यावदन्ताय कल्पते ४ इत्यामन्त्र्य हृषीकेशं पार्थं दुर्य्योधनं तथा
जगाम द्वारकां शौरि: स्वसैन्य परिवारित: ५ गत्वा द्वारवतीं रामो हृष्ट पुष्ट जनाकुलां स्वोरान्तव्ये सुतीर्थेषु पयो
पानं हलायुध: ६ पीतवानो जगामार्थ रैवतोद्यानमृद्धिमत् हस्ते गृहीत्वा सुभ्रू रेवतीं सप्सरोपमां ७ स्त्रीकैः
दस्त्वक मध्यस्थो ययौ मत्त: पदा स्खलन् ददर्श चवनं वीरो रमणीयमनुत्तमं ८ सर्व्वर्त्तु फल पुष्पाढ्यं शाखामृग
गणाकुलं पुष्पं पद्मवनोपेतं सपल्वलं महावनं ९ स शृण्वन् प्रीतिजननान् वहुन्मदकलान् शुभान् श्रोत्र-
रम्यान् सुमधुरान् शब्दान् खगमुखेरितान् १० सर्व्वर्त्तु फल भारान्यान् सर्व्वर्त्तु कुसुमोज्ज्वलान् अपश्यत् पाद-

यो स्तत्र विहरो स्तु नादितान् ११ आम्रानाम्रातकान् भव्यान् नारिकेलान् सतिन्दुकान् आविल्वकांस्तथा ।
जीरान् दाडिमान् वीजपूरकान् १२ पनसान् लकुचान् मोचान् नीपांश्चाति मनोहरान् पारावतांश्च कङ्कोलान् न-
लिनानम्ल वेतसान् १३ भल्लातकान् आमलकांस्तिन्दुकांश्च महाफलान् इङ्गुदान् करमर्दांश्च हरीतकिविभीत-
कान् १४ एतानन्यांश्च सतरून् ददर्श यदुनन्दन: तथैवाशोक पुन्नाग केतकी वकुलांस्तथा। १५ चम्पकान् सप्त।
पर्णांश्च कर्णिकारान् समालतीन् पारिजातान् कोविदारान् मन्दारान् वदरांस्तथा १६ पाटलान् पुष्पितान् ।
रम्यान् देवदारुद्रुमांस्तथा सालांस्तालांस्तमालांश्च किंशुकान् वञ्जुलान् वरान् १७ चकोरै: शतपत्रैश्च।
भृङ्गराजैस्तथा शुकै: कोकिलै: कलविङ्कश्च हारीतैर्जीवजीवकै: १८ प्रियपुत्रैश्चातकैश्च तथान्यैर्विविधै:
खगै: श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितं १९ सरांसि च मनोज्ञानि प्रसन्नसलिलानि च कुमुदै: पुण्डरी।
कैश्च तथा नीलोत्पलै: शुभै: २० कह्लारै: कमलैश्चापि आचितानि समन्तत: कादम्बैश्चक्रवाकैश्च तथैव
जलकुक्कुटै: २१ कारण्डवै: प्लवैर्हंसै: कूर्मैर्मद्गुभिरेव च एभिश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभि:॥ ०२ ॥
क्रमेणाथ वनं शौरिर्वीक्ष्यमाणो मनोरमं जगाम नु गत: स्त्रीभिर्लता गृहमनुत्तमं २३ स ददर्श द्विजांस्तत्र वेदवेदाङ्ग।
पारगान् कौशिकान् भार्गवांश्चैव भारद्वाजान् सगौतमान् २४ विविधेषु च सम्भूतान् वंशेषु द्विजसत्तमान् कथा।
श्रवणवद्धोत्का नुपविष्टान्महत्सु च २५ कथाजिनोत्तरीयेषु कुशेषु च हर्षी सुच सूतञ्च तेषां मध्यस्थं कथयन्तं।
कथा: शुभा: २६ पौराणिकी: सुरर्षीणामाद्यानां चरिता श्रया: दृष्ट्वा रामं द्विजा: सर्व्वे मधुपानारुणेक्षणं॥ २७॥
मत्तोऽयमिति मन्वाना: समुत्तस्थुस्त्वरान्विता: पूजयन्तो हलधरं स्थितं सूतवंशजं २८ तत: क्रोधसमाविष्टो ह-
लीसूतं महावल: निजघान विह्वलाक्ष: सोभिना येव दानव: २९ अध्यास्यति पदे ब्राह्मं तस्मिन् सूते निपातिते ।
निष्क्रान्तास्ते द्विजा: सर्व्वे वनात् कृष्णाजिनाम्बरा: ३० अवधूतं तथात्मानं मन्यमानो हलायुध: चिन्तयामास।
सुमहन्मया पापमिदं कृतं ३१ ब्राह्मस्थानं गतो ह्येष यतः सूतो विनिपातित: तथा ह्येते द्विजा: सर्व्वे मामवेक्ष्य।
विनिर्गता: ३२ शरीरस्य च मे गन्धो लोहस्यैव सुदु:सह: आत्मानञ्चावगच्छामि ब्रह्मघ्नमिव कुत्सितं ॥ ३३ ॥

धिगसद्यं तथा मद्य मति मान मभीरुतां येरा विष्टेन सुमहन्मया पाप मिदं कृतं ३४ तत्क्षयार्थं च विध्यामि व्रतं द्वादश।
वार्षिकं स्वकर्म ख्यापनं कुर्व्वन् प्राय श्चित्त मनुत्तमं ३५ अद्य्ष्ये यं समार्य्यातीर्थं यात्रा मया धुना गतामेव प्रयास्यामि
प्रतिलोमां सरस्वतीं ३६ अतो जगाम रामो ऽसौ प्रतिलोमां सरस्वतीं ततः परं शृणुध्वं मे पाराडवेय कथा श्रयं ॥ ३७॥
इति मार्कण्डेय पुराणे वलदेव ब्रह्म हत्या ६ धर्म पक्षिण ऊचुः हरिश्चन्द्रेति राजर्षि रासी त्त्रेता युगे पुरा धर्मात्मा पृथि-
वी पाल : प्रोल्लस त्कीर्त्ति रुत्तम : १ न दुर्भिक्षं नच व्याधि र्नाकाले मरणं नृणां ना धर्म रुचय : पौरास्तस्मिन् शासति ।
पार्थिवे २ बभूवु र्नतथो न्मत्ता धन वीर्य्य तपो मदैः नाजायन्त स्त्रियश्चैव काश्चिद प्राप्त यौवना : ३ सकदाचिन्महावा-
हुररण्ये ऽनुसरन् मृगं शुश्राव शब्द मस कृत् त्रायस्वे ति च योषितां ४ सविहाय मृगं राजा माभै षीरित्य भाषत मयि ।
शासति दुर्मेधा : कोय मन्याय इन्निमान् ५ तत्क्रन्दितानु सारीच सर्व्वारम्भ विघात कृत् एतस्मिन्नन्तरे रौद्रो विघ्न राट् सम
चिन्तयत् ६ विश्वा मित्रो यमतुलं तप आस्थाय वीर्य्यवान् प्राग सिद्धा भवादीनां विद्याः साधय तिव्रती ७ साध्य मानाः क्षम
मौन चित्त संयमिना ऽमुना तां वै भयार्त्ता : क्रन्दन्ति कथं कार्य्य मिदं मया ८ तेजस्वी कौशिक श्रेष्ठो वयमस्य सु दुर्बला :
क्रोशन्त्येता स्तथा भीता दुष्पारं प्रति भाति मे ९ अथ वायं नृप : प्राप्तो मा भैरिति वदन् मुहुः इम मेव प्रविश्याशु साध
यिष्ये यथे प्सितं १० इति सञ्चिन्त्य रौद्रेण विघ्न राजेनवै ततः तेना विष्टो नृप : कोपादिदं वचन मब्रवीत् ११ को ऽयं।
वध्नाति वस्त्रान्ते पावकं पाप कृन्नर : वलौजसा तेजसा दीप्ते मयि पत्यावुपस्थिते १२ सोद्य मत्कार्मुकाक्षेप विदीपि-
त दिगन्तरैः शरै र्विभिन्न सर्व्वाङ्गो दीर्घ निद्रां प्रवेक्ष्यति १३ विश्वा मित्रस्ततः क्रुद्धः श्रुत्वा तन्नृपते र्वचः क्रुद्धे च-
र्षिवरे तस्मिन् ने शुर्विद्या : क्षणेनता : १४ सचापि राजा तं दृष्ट्वा विश्वामित्रन्तपो निधिं भीतः प्रावेपताऽत्यर्थं सह।
सा श्वत्थ पर्णवत् १५ सद्गुरान्स न्निति यदा मुनि स्तिष्ठे ति चाब्रवीत् ततः सराजा विनया त्प्रणि पत्याभ्य भाषत १६
भगवन्नेष धर्म्मो मे नापराधो मम प्रभो न क्रोद्धु मर्हसि मुने निज धर्म रतस्य मे १७ दातव्यं रक्षितव्यं च धर्मज्ञेन।
महीक्षिता चापञ्चोद्यस्य योद्धव्यं धर्मशास्त्रानुसारतः १८ विश्वामित्र उवाच ॥ १९ ॥ दातव्यं कस्य के रक्ष्याः
केर्योद्धव्य ञ्च ते नृप क्षिप्र मेतत्स मा चक्ष्व यद्य धर्म भयन्तव १९ हरिश्चन्द्र उवाच दातव्यं विप्र मुख्येभ्यो ये चान्ये

कृशा हृन्तय: रक्ष्या भीता: सदा युद्धे कर्तव्यं परि पन्थिभि: २० विश्वामित्र उवाच यदि राजा भवान् सम्यग्राज धर्म। मवेसते निवेश्य कामो विप्रो ऽहं दीयता मिष्ट दक्षिणा २१ पक्षिणा ऊचु: एतद्राजा वच: श्रुत्वा प्रहृष्टेनान्तरात्मना। पुनर्जात मिवात्मानं मेने प्राह च कौशिकं २२ उच्यतां भगवन् यत्ते दातव्य मविशङ्कितं दत्त मित्येव तद्विद्धि यद्यपि स्यात् सुदुर्लभं २३ हिरण्यं वा सुवर्णं वा पुत्र: पत्नी कलेवरं प्राणा राज्यं पुरं लक्ष्मी यदभि प्रेत मात्मन: ॥ २४ ॥ विश्वामित्र उवाच राजन् प्रति गृहीतो ऽयं यस्ते दत्त: प्रतिग्रह: प्रयच्छ प्रथमं ताव द्दक्षिणां राजसूयकीं ॥ २५ ॥ राजोवाच ब्रह्मंस्ता मपि दास्यामि दक्षिणां भवतो ह्यहं व्रियतां द्विज शार्दूल यस्ते ऽष्ट: प्रतिग्रह: २६ विश्वामित्र उवाच ससागरां धरा मेतां सभू भृद्ग्राम पत्तनां राज्यञ्च सकलं वीर रथाश्व गज संकुलं २७ कोष्ठागारञ्च कोशञ्च यच्चान्य द्विद्यते तव विना भार्य्याञ्च पुत्रञ्च शरीरञ्च तवानघ २८ धर्मञ्च सर्व्व धर्मज्ञ योधान्त मनुगच्छति वहुनावाक्ति मुक्तेन सर्वमेतत् प्रदीयतां २९ पक्षिणा ऊचु: प्रहृष्टेनैव मनसा सो ऽविकार मुखो नृप: तस्यर्षेर्व्वचनं श्रुत्वा तथेत्याह कृताञ्जलि: ३० विश्वामित्र उवाच सर्व्वस्वं यदि मे दत्तं राज्य मुर्व्वी बलं धनं प्रभुत्वं कस्य राजर्षे राज्यस्थे तापसे मयि ३१ हरिश्चन्द्र उवाच यस्मिन्न पि मया काले ब्रह्मन्दत्ता वसुन्धरा तस्मिन्नपि भवान् स्वामी किमुताद्य महीपति: ३२ विश्वामित्र उवाच यदि राजंस्त्वया दत्ता मम सर्वा वसुन्धरा यत्र मे विषये स्वाम्यं तस्मान्निष्क्रान्तु मर्हसि ३३ श्रोणी सूत्रादि सकलं मुक्ता भूषण संग्रहं तरु वल्कल मावध्य सह पत्न्या सुतेन च ३४ पक्षिणा ऊचु: तथेति चोक्ता कृत्वा च राजा गन्तुं प्रचक्रमे स्वपत्न्या शैव्यया सार्द्धं वालकेनात्मजेन च ३५ व्रजत: स ततो रुद्धा पन्थानं प्राह तं नृपं क्व यास्यसीत्यदत्वा मे दक्षिणां राजसूयिकीं ३६ हरिश्चन्द्र उवाच भगवन् राज्य मेतत्ते दत्तं निहत कण्टकं अवशिष्ट मिदं ब्रह्मन्नद्य देह त्रयं मम ३७ विश्वामित्र उवाच तथापि खलु दातव्या त्वया मे यज्ञ दक्षिणा विशेषतो ब्राह्मणानां हन्त्यदत्तं प्रतिश्रुतं ३८ यावन्तो ऽसौ राजसूये ब्राह्मणानां भवेन्नृप तावदेव तु दातव्या दक्षिणा राजसूयिकी ३९ प्रति श्रुत्य च दातव्यं योद्धव्यं चाततायिभि: रक्षितव्यास्तथा चार्त्ता स्त्वयैव प्राक् प्रति श्रुतं ४० हरिश्चन्द्र उवाच भगवन् साम्प्रतं नास्ति दास्ये काल क्रमेणाते प्रसादं कुरु विप्रर्षे सद्भाव मनु चिन्त्य च ४१ विश्वामित्र उवाच

किं प्रभाषसि मया काल : प्रतीक्ष्यस्ते जना धिपं शीघ्रमा चक्ष्व शापाग्नि रन्यथा त्वां प्रधक्ष्यति ४२ हरिश्चन्द्र उवाच
मामेन तव विप्रर्षे प्रदास्ये दक्षिणा धनं साम्प्रतं नास्ति मे विप्र मनुज्ञां दातु मर्हसि ४३ विश्वामित्र उवाच गच्छ
गच्छ नृप श्रेष्ठ स्व धर्म मनु पालय शिव स्तेऽस्तु ध्वा भवतु मासन्तु परि पन्थिन : ४४ पक्षिण ऊचु : अनुज्ञात : सभा
र्य्योऽति जगाम वसुधा धिप : पद्भ्या मनु चिरा गन्तु मन्व गच्छत तं प्रिया ४५ तं सभार्य्यं नृप श्रेष्ठं निर्यान्तं ससुतं पुरात्
दृष्ट्वा प्रचुक्रुशु : पौरा राजानं चानु यायिन : ४६ हानाथ किं जहा स्य स्मान् नित्यार्त्ति परि पीडितान् त्वं धर्म तत्परो राजन्
पौरा नुग्रह कृत्तथा ४७ नयास्मान पि राजर्षे यदि धर्म मवेक्ष से मुहूर्त्तं तिष्ठ राजेन्द्र भवतो मुख पङ्कजं ४८ पिबामो नेत्र
भ्रमरै : कदा द्रक्ष्या महे पुन : यस्य प्रयातस्य पुरो यान्ति पृष्ठे च पार्थिवा : ४९ तस्यानु याति भार्य्येयं गृहीत्वा बालकं
सुतं यस्य भृत्या : प्रया तस्य यान्त्य ग्रे कुञ्जर स्थिता : ५० सएव पद्भ्यां राजेन्द्रो हरिश्चन्द्रोऽद्य गच्छति हा राजन् सुकु
मारं ते सुभ्रु सुत्वच सुनसं ५१ पथि पांशु परि क्लिष्टं मुखं की दृग्भ विष्यति तिष्ठ तिष्ठ नृप श्रेष्ठ स्व धर्म मनु पालय ५२
आनृ शंस्यं परो धर्म : क्षत्रियाणां विशेषत : किं दारै : किं सुतैर्नाथ धनै र्धान्यै रथा पिवा ५३ सर्व्वं मेतत् परित्यज्य
छाया भूता वयं तव हा नाथ हा महाराज हा स्वामिन् किं जहासिन : ५४ यत्र त्वं तत्र हि वयं तत्सुखं यत्र वै भवान् नग
रन्त द्भवान् यत्र स स्वर्गो यत्र नो नृप : ५५ इति पौर वच : श्रुत्वा राजा शोक परिप्लुत : अतिष्ठत् सतदा मार्गे तेषामे वानु
कम्पया ५६ विश्वा मित्रोऽपितं दृष्ट्वा पौर वाक्या कुली कृतं रोषामर्ष विवृत्ताक्ष : समागत्य वचोऽब्रवीत् ॥ ५७ ॥
धिक् त्वां दुष्ट समाचार मनृतं जिह्म भाषिणं मम राज्यञ्च दत्वाय : पुन : प्राकृष्ट मिच्छसि ५८ इत्युक्त : परुषन्तेन
गच्छामी ति सवेपथु : ब्रुवन्नेवं ययौ शीघ्र माकर्षन्दयितां करे ५९ कर्षतस्तां ततो भार्य्यां सुकुमारीं श्रमातुरां सह
सा दण्ड काष्ठे न ताडया मास कौशिक : ६० तां तथा ताडितां दृष्ट्वा हरिश्चन्द्रो मही पति : गच्छामीत्याह दुःखार्त्तो
नान्यत् किंचिदु दाहरत् ६१ अथ विश्वे तदा देवा : पञ्च प्राहु : कृपालव : विश्वामित्र : सुपापोऽयं लोकान् कान्से
म वाप्स्यति ६२ येनायं यज्वनां श्रेष्ठ : स्वराज्यादवरोपित : कस्य वा श्रद्धया पूतं सुतं सोमं सहाध्वरे पीत्वा वयं प्रया
स्यामो मुदं मन्त्र पुर : सरं ६३ पक्षिण ऊचु : इति तेषां वच : श्रुत्वा कौशिकोऽति रुषान्वित : शशाप तान् मनुष्य

त्वं सर्व्वे पूय सवा प्ययथ ६४ प्रसादित स्तथैते : प्राह पुनरेव महा मुनि : मानुषत्वे ऽपि भवतां भविष्यैनैव सन्तति : ६५ नदार॰
संग्रह श्चैव भवितान च मत्सर : काम क्रोध विनि मुक्ता भविष्य थ सुरा : पुन: ६६ ततो ऽवतेरु र्ते ऽंशैर्वै वास्ते कुरु वेश्मनि॥
द्रौपदी गर्भ सम्भूता : पञ्चैवे पाराडुनन्दना : ६७ एतस्मात् कारणात् पञ्च पाराडवे या महारथा : नदार संग्रहे प्राप्ता :
प्रा पालस्य महा मुने : ६८ एतत्ते सर्व्वं माख्यातं पाराडवेय कथा श्रयं प्रश्नंच तुष्टयं गीतं कि मन्य च्छ्रोतु मिच्छसि ६९॥
इति मार्कराडेय पुराणे द्रौपदेयो त्पत्ति : ७ जैमिनि रुवाच भवद्भि रिद माख्यातं यथा प्रश्न मनुक्रमात् महत् कौतू॰
हलं मे ऽस्ति हरिश्चन्द्र कथां प्रति १ अहो महात्मना तेन प्राप्तं कृच्छ्र मनुत्तमं कच्चित् सुख मनु प्राप्त तादृगे दद्दि जोत्तमा:
२ पक्षिणा ऊचु : विश्वामित्र वच : श्रुत्वा सराजा प्रूय यौ शनै : शैव्य यानु गतो दु : खी भार्य्यया बाल पुत्रया ३ सगत्वा
वसुधा पालो दिव्यां वाराणसीं पुरीं नैषा मनुष्य भोग्येति शूल पाणे : परिग्रह : ४ जगाम पद्भ्यां दु : खार्त्त : सह पत्न्यानु कू॰
लया पुरी प्रवेशे दद्दृशे विश्वामित्र मुपस्थितं ५ तं दृष्ट्वा समनु प्राप्तं विनया वनतो ऽभवत् प्राह चैवाञ्जलिं कृत्वा हरि॰
श्चन्द्रो महा मुनिं ६ इमे प्राणा : सुत श्चायं नियं पत्नी मुने मया नते कृत्य मस्त्या शुतन्कु हाणा र्घ्य मुत्तमं ७ यच्चान्यत्
कार्य्यं म स्मा भिस्त त्वनु ज्ञातु मर्हसि ८ विश्वामित्र उवाच पूर्णा : समा सो राजर्षे दीय तां मम दक्षिणा राजसूय निमित्तं
हि स्म र्यं ते स्व वचो यदि ९ हरिश्चन्द्र उवाच ब्रह्मन्न द्यैव संपूर्णो मांसो ऽम्लान तपोधन तिष्ठ त्येत द्दिनार्द्धं यन्नत् प्रती॰
क्षस्व नाचिरं १० विश्वामित्र उवाच एव मस्तु महा राज आगा मिष्यास्य हं पुन : शापं तव प्रदास्यामि न चेदद्य प्रदास्य॰
सि ११ पक्षिणा ऊचु : इत्युक्त्वा ऽयय यौ विप्रो राजा चा चिन्तयत्तदा कथ मस्मै प्रदास्यामि दक्षिणा या प्रति श्रुता १२
कुत : पुष्टानि मित्राणि कुतो ऽर्थ : साम्प्रतं मम प्रति ग्रह : प्रदुष्टो मे नाहं याया मध : कथं १३ किंनु प्राणान् विसृज्ज्या
मि कान्दिशं यामि किञ्चन : यदि नाशं न मिष्यामि प्रदाय प्राति श्रुतं १४ ब्रह्मस्व हृत् कृमि : पापो भविष्याम्य धमा।
धम : अथवा प्रेष्यतां याम्ये तदे वात्र विक्रय : १५ पक्षिणा ऊचु : राजानं व्याकुलं दीनं चिन्तया नम्र मुखं तत्युवाच
तदा पत्नी वाक्य गद्गदया गिरा १६ त्यज चिन्तां महाराज स्व सत्य मनु पालय श्मशान वद्वर्ज्जनीयो नर : सत्य बहिष्कृत :।
१७ नात : परतरं धर्मं वदन्ति पुरुषस्य तु याद्दशं पुरुष व्याघ्र स्व सत्य परिपालनं १८ अग्नि होत्र मधीतं वा दानाद्या।

ष्चाविला : क्रिया : भजन्ते तस्यैवे फल्यं यस्य वाक्य मकारणां १९ सत्य मत्यन्त मुदितं धर्म शास्त्रेषु धीमतां तारणाया
न्नृतं तद्वत् यातना या कृतात्मनां २० सप्ता ध्वमे धाना हत्य राजसूय ञ्च पार्थिव : कालेनाम च्युत : स्वर्गाद सत्य वचनात्
सकृत् २१ राजन् जात मयत्यं मे इत्युक्त्वा प्रकरोदह वाष्पाम्बु प्लुतने त्रान्ता मुवाचेदं मही पतिः २२ हरिश्चन्द्र उवाच वि-
मुञ्च भद्रे सन्ताप मयं तिष्ठति वालक : उच्यतां वक्तु कामासि यद्वा त्वं गज गामिनि २३ पत्न्युवाच राजन् जात मपत्यं
मे सतां पुत्र फला : स्त्रिय : समां प्रदाय वित्तेन देहि विप्राय दक्षिणां २४ पक्षिणा ऊचु : एतद्वाक्य मुप श्रुत्य ययौ मो-
हं मही पतिः प्रति लभ्य च संज्ञां स विललाप अति दुःखित : २५ महद्दुःख मिदं भद्रे यत्त्व मेवं ब्रवीषिमां किन्त वस्मित
संलापा मम पापस्य विस्मृता : २६ हा हा कथं त्वया वाक्यं वक्तुमे तत शुचि स्मिते दुर्वाच्य मे तद्वचनं कथं शक्नोम्यहं
कथं २७ इत्युक्त्वा सनर श्रेष्ठो धिग्धि गित्य सकृद् ब्रुवन् निप पात मही पृष्ठे मूर्च्छयाभि परिप्लुत : २८ शयान भुवितं दृ-
ष्ट्वा हरिश्चन्द्रं मही पतिं उवाचेदं स करुणं राजपत्नी सुदुःखिता २९ पत्न्युवाच हा महाराज कस्येदम यध्यान मुप -
स्थितं यत्त्वं निपतितो भूमौ राङ्कवास्तरणो चित : ३० येन कोट्यग्र गोवित्तं विप्राणामप वर्जितं सएव पृथिवी नाथो
भूमौ स्व पिति मे पतिः ३१ हा कष्टं किंत वानेन कृतं देव मही क्षिता यदिन्द्रो पेन्द्र तुल्यो ऽयं नीत : प्रस्वाप नीं दशां ३२
इत्युक्त्वा सापि सुश्रोणी मूर्च्छिता निपपात ह भर्तृ दुःख महा भारेणा सह्येन नि पीडिता ३३ तौ तथा पतितौ भूमाव
नाथौ पितरौ शिशु : दृष्ट्वा त्यन्त क्षुधा विष्टः प्राह वाक्यं सुदुःखित : ३४ तात तात दद स्वान्न मम्बाम्ब भोजनं दद क्षु-
न्मे वलवती जाता जिह्वाग्रं शुष्यते तथा ३५ पक्षिणा ऊचु : एतस्मिन्नन्तरे प्राप्तो विश्वामित्रो महातपा : दृष्ट्वा तुतं
हरिश्चन्द्रं पतितं भुवि मूर्च्छितं ३६ सवारिणा समभ्युक्ष्य राजान मिदम ब्रवीत् उत्तिष्ठो त्तिष्ठ राजेन्द्र तां दद स्वेष्ट दक्षिणां
३७ ऋणं धारयतो दुःख महन्यहनि वर्द्धते आप्याय्यमान : सतदा हिम शीतेन वारिणा ३८ अवाप्य चेतनां राजा
विश्वामित्र मवेक्ष्य च पुनर्मोहं समापेदे सच क्रोधं ययौ मुनि: ३९ समाश्वास्य राजानं वाक्य माह द्विजोत्तम : ।
दीयतां दक्षिणा सा मे यदि धर्म्म मवेक्षसे ४० सत्येनार्क : प्रतपति सत्ये तिष्ठन्ति मेदिनी सत्यञ्चोक्तं परो धर्म्म: स्वर्ग:
सत्ये प्रति ष्ठित : ४१ अश्वमेध सहस्रञ्च सत्यञ्च तुलया धृत अश्वमेध सहस्राद्धि सत्य मेवं विशिष्यते ४२ अथवा :

मा॰पु॰
३२

किं ममैतेन साध्वा प्रोक्तेन कार्य्यं अनार्य्ये पाप संकल्पे क्रूरे चानृत वादिनि ४३ त्वयि राज्ञि प्रभवति सद्भावः श्रूयतां मम
ये अधुना मे तव शिरो राजन्न दास्यति भवान् यदि ४४ अस्ताचलं प्रयाते ऽर्के शाप्यामि त्वां ततो ध्रुवं इत्युक्त्वा स य-
यौ विप्रो राजा चासीद्भयातुरः ४५ कान्दिग्भूतोऽधमो निःस्वो नृशंस धनिनार्दितः भार्य्यास्य भूयः प्राहेदं क्रि-
यतां वचनं मम ४६ शापानलनिर्दग्धः पञ्चत्वमुपयास्यसि सतथा चोद्यमानस्तु राजा पत्न्या पुनः पुनः ४७
प्राह भद्रे करोम्येष विक्रयं तव निर्घृणः नृशंसैरपि यत्कर्तुं न शक्यं तत्करोम्यहं ४८ यदि मे शक्यते वाणी वक्तु-
मीदृक् सुदुर्व्वचः एवमुक्त्वा ततो भार्य्यां गत्वा नगरमातुरः वाष्पापिहितकण्ठाक्षस्ततो वचनमब्रवीत् ४९ राजो-
वाच भो भो नागरिकाः सर्व्वे शृणुध्वं वचनं मम किं मां पृच्छथ कस्त्वं भो नृशंसो ऽहममानुषः ५० राक्षसो वाति
कठिनस्ततः पापतरोऽपिवा विक्रेतुं दयितां प्राणेभ्यो न आगतोऽस्म्यहं ५१ यदि वः कस्य चित् कार्य्यं दास्या प्रा-
णेष्टा मम सब्रवीतु त्वरायुक्तो यावत् सन्धार यास्यहं ५२ पार्थिवा ऊचुः अथ वृद्धो द्विजः कश्चिदागत्याह

२२

नराधिपं समर्पयस्व मे दासीमहं क्रेता धनप्रदः ५३ अस्ति मे वित्तमस्तोकं सुकुमारी च मे प्रिया गृहकर्म न शक्नोति
कर्त्तुमस्मात् प्रयच्छ मे ५४ कर्म्मणा यावयो रूप शीलानां तव योषितः अनुरूपमिदं वित्तं गृहाण यच्च मेऽव-
लां ५५ एवमुक्तस्य विप्रेण हरिश्चन्द्रस्य भूपतेः व्यदीर्य्यत मनो दुःखान्न चैनं किञ्चिदब्रवीत् ५६ ततः सविप्रो
नृपतेर्वल्कलान्ते दृढं धनं बध्वा केशेष्वथादाय नृपपत्नीमकर्षयत् ५७ रोहिताश्वोऽपि दृष्ट्वा कृष्यन्तु मातरं
हस्तेन वस्त्रमाकर्षन् काकपक्षधरः शिशुः ५८ राजपत्न्युवाच मुञ्चार्य्य मुञ्च तावन्मां यावत् पश्याम्यहं शिशुं ॥
दुर्लभं दर्शनं तात पुनरस्य भविष्यति ५९ पश्यैहि वत्स मामेवं मातरं दास्यतां गतां मां मा स्प्राक्षीः राजपुत्र अस्पृ-
श्याहं तवाधुना ६० ततः सबालः सहसा दृष्ट्वा कृष्यन्तु मातरं समभ्यधावदम्बेति रुदन् साश्रु विलोचनः ॥ ६१ ॥
तमागतं द्विजः क्रेता बालमभ्याहनत् पदा वदंस्तथापि सोऽम्बेति नैवामुञ्चत मातरं ६२ राजपत्न्युवाच प्रसादं
कुरु मे नाथ क्रीणीष्वेमञ्च बालकं क्रीतापि नाहं भवतो विनैनं कार्य्यसाधिका ६३ इत्थं ममाल्प भाग्यायाः प्रसादं
सुमुखो भव मां संयोजय बालेन वत्सेनेव पयस्विनी ६४ ब्राह्मण उवाच गृह्यतां वित्तमेतत्ते दीयतां बालको मम ॥

स्त्री पुंसो धर्मे शास्त्रज्ञे : कृतमेव हि वेतनं शतं सहस्रं लक्षञ्च कोटि मूल्यं तथा परे : ६५ पक्षिण ऊचुः तथैव तस्य तद्विज्ञं वद्धोत्तर पटे ततः प्रगृह्य बालकं माता सद्दौ वास्य अन्वयत् ६६ नीयमानो तु तौ दृष्ट्वा भार्य्या पुत्रौ सपार्थिव : विललाप सुदुःखार्तो निः श्वस्योष्णं पुनः पुनः ६७ यांन वायुर्न चादित्यो नेन्दुर्न च पृथग्जनः दृष्टवन्तः पुरा पत्नी सेयं दासीत्वमागता ६८ सूर्य्यवंश प्रसूतो ऽयं सुकुमार कराङ्गुलिः सं प्राप्तो विक्रयं बालो धिङ्मामस्तु सुदुर्म्मतिं ६९ हा प्रिये हा शिशो वत्स ममानार्य्यस्य दुर्नयैः दैवाधीनां दशां प्राप्तो न मृतो ऽस्मि तथापि धिक् ७० ॥ पक्षिण ऊचुः एवं विलपतो राज्ञः स विप्रो ऽन्तरधीयत वृक्ष गेहादिभिस्तुङ्गैस्ता वादाय त्वरान्वितः ७१ विश्वामित्रस्ततः प्राप्तो नृपं वित्तम याचत तस्मै समर्पया मास हरिश्चन्द्रो ऽपि तद्धनं ७२ तद्वित्तं स्तोकमालोक्य दारविक्रय सम्भवं शोकाभिभूतं राजानं कुपितः कौशिको ऽब्रवीत् ७३ क्षत्रबन्धो ममेमां त्वं सदृशीं यज्ञदक्षिणां मन्यसे यदि तत् क्षिप्रं पश्य त्वं मे बलं परं ७४ तपसो ऽत्र सुतप्तस्य ब्राह्मण्यस्यामलस्य च मत्प्रभावस्य चोग्रस्य शुद्धस्याध्ययनस्य च ७५ हरिश्चन्द्र उवाच अन्यां दास्यामि भगवन् कालः कश्चित् प्रतीक्ष्यतां साम्प्रतं नास्ति विक्रीता पत्नी पुत्रश्च बालकः ७६ विश्वामित्र उवाच चतुर्भागः स्थितो यो ऽयं दिवसस्य नराधिप एष एव प्रतीक्ष्यो मे वक्तव्यं नोत्तरं त्वया ७७ पक्षिण ऊचुः तमेवमुक्त्वा राजेन्द्रं निष्ठुरं निर्घृणं वचः तदादाय धनं तूर्णं कुपितः कौशिको ययौ ७८ विश्वामित्रे गते राजा भयशोकाब्धि मध्यगः सर्वाकारं विनिश्चित्य प्रोवाचोच्चैरधोमुखः ॥ ७९ ॥ वित्तक्रीतेन यो ह्यर्थी मया प्रेष्येण मानवः स ब्रवीतु त्वरायुक्तो यावत्तपति भास्करः ८० अथाजगाम त्वरितो धर्मश्चण्डालरूपधृक् दुर्गन्धो विकृतो रूक्षः श्मश्रुलो दन्तुरो घृणी ८१ कृष्णो लम्बोदरः पिङ्गः रूक्षाक्षः परुषाक्षरः गृहीत पक्षि पुञ्जश्च शवमाल्यैरलङ्कृतः ८२ कपालहस्तो दीर्घास्यो भैरवो ऽतिवदन् मुहुः श्वगणाभिवृतो घोरो यष्टिहस्तो निराकृतिः ८३ चण्डाल उवाच अहमर्थी त्वया शीघ्रं कथयस्वात्म वेतनं स्तोकेन बहुना वापि येन वा लभ्यते भवान् ८४ पक्षिण ऊचुः तं तादृशमथालक्ष्य क्रूरदृष्टिं सुनिष्ठुरं वदन्तमति दुःशीलं कस्त्वमित्याह पार्थिवः ८५ चण्डाल उवाच चण्डालो ऽहमिहाख्यातः प्रवीरेति पुरोत्तमे विख्यातो वध्यानां

को मृतकम्बल हारकः ८६ हरिश्चन्द्र उवाच नाहं चण्डाल दासत्व मिच्छेयं सुविगर्हितं वरंशापाग्निना दग्धो न चण्डाल वशं गतः ८७ पक्षिणा ऊचुः तस्यैवं वदतः प्राप्तो विश्वामित्र स्तपोनिधिः कोपामर्षविवृत्ताक्षः प्राह चेदं नराधिपं ८८ विश्वामित्र उवाच चण्डालोऽयमनल्पं ते दातुं वित्त मुपस्थितः कस्मान्न दीयते मह्य मशेषा यज्ञदक्षिणा ८९ हरिश्चन्द्र उवाच भगवन् सूर्य्य वंशोत्थ मात्मानं वेद्मि कौशिक कथं चण्डाल दासत्वं गमिष्ये वित्त कामुकः ९० विश्वामित्र उवाच यदि चण्डाल वित्तं त्व मात्म विक्रयजं मम न प्रदास्यसि कालेन प्राप्स्यामि त्वाम संशयं ९१ पक्षिणा ऊचुः हरिश्चन्द्र स्ततो राजा चिन्ता दास्थित जीवितः प्रसीदेति वदन् पादा वृषेर्जग्राह विह्वलः ९२ दासोऽस्म्यार्त्तोऽस्मि भीतोऽस्मि त्वद्भक्त श्च विशेषतः कुरु प्रसादं विप्रर्षे कष्टं चण्डाल सङ्करं ९३ भवेयं वित्त शेषेण सर्व्व कर्म करो वशः तवैव मुनिशार्दूल प्रेष्य श्चित्तानुवर्त्तकः ९४ विश्वामित्र उवाच यदि प्रेष्यो मम भवान् चण्डालाय ततो मया दास भाव मनुप्राप्तो दत्तो वित्तार्बुदेन वै ९५ पक्षिणा ऊचुः एव मुक्ते तदा तेन श्वपाको हृष्ट मानसः विश्वामित्राय तद्द्रव्यं दत्त्वा बध्वा नरेश्वरं ९६ दण्ड प्रहार संभ्रान्त मतीव व्याकुलेन्द्रियं इष्ट बन्धु वियोगार्त्त मनयन्नि जपत्तनं ९७ हरिश्चन्द्र स्ततो राजा वसं श्चण्डाल पत्तने प्रातर्मध्यान्ह समये सायञ्चैत दगायत ९८ बालादीन मुखी दृष्ट्वा बाल दीन मुखं पुरः मां स्मरत्य सुखा विष्टा मोच यिष्यति नो नृपः ९९ उपात्त वित्तो विप्राय दत्वा वित्तमतोऽधिकं न सा मां मृग शावाक्षी वेत्ति पापतरं कृतं १०० राज्य नाशः सुहृत्त्यागो भार्य्यातनय विक्रयः प्राप्ता चण्डालता चेयमहो दुःख परम्परा १०१ एवं सनि वसन्नित्यं सस्मार दयितं सुतं भार्य्याञ्चात्म सना विष्टो हृत सर्व्वस्व आतुरः १०२ कस्य चित्त्वथ कालस्य मृत चेला पहारकः हरिश्चन्द्रोऽभवद्राजा श्मशानेतद्व शानुगः १०३ चण्डालेनानुशिष्ट श्च मृत चेला पहारिणा शवा गमन मन्विच्छन्निहातिष्ठ दिवानिशं १०४॥ इदं राज्ञोऽपि देयञ्च षड्भागन्तु शवं प्रति त्रयस्तु मम भागाः स्युर्द्वौ भागौ तव वेतनं १०५ इति प्रति समादिष्टो जगाम शव मन्दिरं दिशं तु दक्षिणां यत्र वाराणस्यां स्थितं तदा १०६ श्मशानं घोर संनादं शिवा शत समाकुलं शव मौलि समाकीर्णं दुर्गन्धं बहु धूमकं १०७ पिशाच भूत वेतालं डाकिनी यक्ष संकुलं गृध्र गोमायु संकीर्णं श्व वन्दपरि

مارکنڈے پوران

मृतसंस्कार कर्त्तासु मदो द्यतः १३२ प्राप्ते तु सप्तमे वर्षे पुत्रस्थाने ऽथ मृतो द्विज आनीतो बन्धुभिर्दृष्टस्तेन तत्राध-
नो गुणी १३३ मूल्यार्थिना तु तेनापि परिभूतास्तु ब्राह्मणाः ऊचुस्ते ब्राह्मणास्तत्र विश्वामित्रस्य चेष्टितम् १३४
पापिष्ठम शुभं कर्म कुरुत्वं पापकारक हरिश्चन्द्रः पुरा राजा विश्वामित्रेण मुक्तासः १३५ दानं पुण्य क्रिया
प्रोन ब्राह्मण स्थापना शनात् यत न समते तेषां तेः स शापो ऽधात्तदा १३६ गच्छ त्वं नरके घोर मधुनैव नराधम
इत्युक्त मात्रे वचने स्वप्नस्थः स नृपस्तदा १३७ अपश्यद्यम दूतान् वै पाशहस्तान् भयावहान् तैः संगृहीतमात्मा-
नं नीयमानं तदा बलात् १३८ पश्यति स्म भृशं खिन्नो हा नाथः पितर्यथैः सर्ववादी स नरके तैलद्रोण्यां निपा-
तितः १३९ ककचैः पाट्यमानस्तु क्षुर धाराभिरप्यधः अन्धे तमसि दुःखार्त्तः पूयशोणित भोजनः ॥ १४०॥
सप्त वर्षे मृतात्मानं पुत्रं स त्वं ददर्शाह दिने दिने तु नरके दह्यते पच्यते ऽन्यतः १४१ खिद्यते क्षोभ्यते ऽन्यत्र मार्यते
घात्यते ऽन्यतः सार्यते दीप्यते ऽन्यत्र शीतवाताहतो ऽन्यतः १४२ एकं दिनं वर्षशत प्रमाणं नरके ऽभवत्
तथा वर्षशतं तत्र आवितं नरके भटैः १४३ ततो निपातितो भूमौ विष्टाशी श्वा व्यजायत वान्ताशी शीत दुःखश्च
मास मात्रे मृतो ऽपि सः १४४ अथापश्यत्स्वरं देहं हस्तिनं वानरं पशुं छागं विडालं कङ्कं च गामविं पक्षिणं कृ-
मिम् १४५ मत्स्यं कूर्मं वराहञ्च श्वाविधं कुक्कुटं शुकं शारिकां स्थावरांश्चैव सर्पमन्यांश्च देहिनः ॥ १४६ ॥
दिवसे दिवसे जन्म शशिनः शशिन स्तदा अपश्यद् दुःख सन्तप्तो दिनं वर्षशतं तथा १४७ एवं वर्षशतं पूर्णं गतं
तत्र कुयोनिषु अपश्यत्स कदाचित् स राजा तत स्वकुलोद्भवम् १४८ तत्र स्थितस्य तस्यापि राज्यं द्यूतेन हारितम्
भार्या हृता च पुत्रश्च सचैका की वनं गतः १४९ तत्रापश्यत्स सिंहं वै व्यादितास्यं भयावहम् विभक्षयिषुमाया-
तं शरभेण समन्वितम् १५० पुनश्च भक्षितः सो ऽपि भार्यां शोचितुमुद्यतः हा शैव्ये क्व गतास्यद्य मामिहापा-
स्य दुःखितं १५१ अपश्यत पुनरेवापि भार्यां स्वां सह पुत्रकां त्रायस्वत्वं हरिश्चन्द्र किं द्यूतेन तव प्रभो १५२ पुत्रस्ते
शोच्यतां यातो भार्या या शैव्यया सह मना पश्यत पुनरपि धावमानः पुनः पुनः १५३ अथापश्यत पुनरपि स्वप्न-
स्थः स नराधिपः नीयते मुक्त केशी सा दीना विवसना बलात् १५४ हा हा वाक्यं प्रमुञ्चन्ती त्रायस्वेत्यसकृत्स्वना

कृतान्तेन काम प्याशां दुरात्मना १७८ एवं दृष्ट्वा हि मे बालं मातुरुत्सङ्गशायिनं स्मृतिमभ्यागतो बालो रोहिता-
श्वो ऽब्जलोचनः १७९ सोऽप्येतामेव मेवत्तो वयोवस्था मुपागतः नीतो यदि न घोरेण कृतान्तेनात्मनो वशं १८०
राजपत्न्युवाच हा वत्स कस्य पापस्य अपध्यानादिदं महत् दुःख मापतितं घोरं यस्यान्तो नो पलभ्यते ॥ १८१ ॥
हा नाथ राजन् भवता मामनाश्वास्य दुःखितां क्वापि सन्ति ष्ठता स्थाने विश्रब्धं स्थीयते कथं १८२ राज्यनाशः
सुहृत्त्यागो भार्य्या तनय विक्रयः हरिश्चन्द्रस्य राजर्षेः किं विधेन कृतं त्वया . १८३ इति तस्या वचः श्रुत्वा राजा स्व-
स्थानतश्च्युतः प्रत्यभिज्ञाय दयितां पुत्रञ्च निधनं गतं १८४ कष्टं शैब्येय मेषा हि स बालोऽयमिति रुदन् रुरो-
द दुःख संतप्तो मूर्च्छामभिजगाम च १८५ साच तं प्रत्यभिज्ञाय तामवस्था मुपागतं मूर्च्छितान्निपपातार्त्ता निश्चेष्टा
धरणीतले १८६ चेतः संप्राप्य राजेन्द्रो राजपत्नी च तौ समं विलेपतुः सुसन्तप्तौ शोक भारावपीडितौ ॥ १८७ ॥
राजोवाच हा वत्स सुकुमारं ते स्वक्षि भ्रूनासिकालकं पश्यतो मे मुखं दीनं हृदयं किं न दीर्य्यते १८८ तात तातेति
मधुरं ब्रुवाणां स्वयमागतं उपगुह्य व दिष्येकं वत्स वत्सेति सो हृदात् १८९ कस्य जानु प्रणीतेन पिङ्गेन क्षितिरेणुना
ममोत्तरीय मुत्सङ्गं तथाङ्गं मलमेष्यति १९० अङ्ग प्रत्यङ्ग सम्भूतो मनो हृदयनन्दनः मया कुपित्रा हा वत्स वि-
क्रीतो येन वस्तुवत् १९१ हृत्वा राज्यमशेषं मे ससाधनं धनमहन् दैवाहिना नृशंसेन दष्टो मे तनयस्ततः १९२ अहं दैवा-
हि दष्टस्य पुत्रस्याननपङ्कजं निरीक्षन्नपि घोरेण विषेणान्धी कृतोऽधुना १९३ एवमुक्त्वा तमादाय बालकं बा-
ष्पगद्गदः परिष्वज्य च निश्चेष्टो मूर्च्छया निपपात ह १९४ राजपत्न्युवाच अयं स पुरुषव्याघ्रः स्वरेणैवोपलक्ष्य-
ते विद्वज्जनमनश्चन्द्रो हरिश्चन्द्रो न संशयः १९५ तथास्य नासिका तुङ्गा अग्रतोऽधोमुखं गता दन्ताश्च मुकुल
प्रख्याः ख्यात कीर्तेर्महात्मनः १९६ श्मशानमागतः कस्मादद्यैष स नरेश्वरः अपहाय पुत्र शोकं सापश्यत
पतितं पतिं १९७ प्रहृष्टा विस्मिता दीना भर्तृ पुत्राधि पीडिता वीक्षन्ती सा ततोऽपश्यत् भर्तुर्दण्डं जुगुप्सितं
१९८ श्वपाकार्हं ततो मोहं जगामायतलोचना प्राप्य चेतश्च शनकैः सगद्गदमभाषत १९९ धिक् त्वां दैवाति
करुणं निर्मर्य्यादं जुगुप्सितं येनायममरप्रख्यो नीतो राजा श्वपाकतां २०० राज्यनाशं सुहृत्त्यागं भार्य्यातनय-

विक्रयं प्रापयित्वा पितो मुक्तश्चण्डालोऽयं कृतो नृपः २०१ हा राजन् जातसन्तापामित्थं मां धरणीतलात् ।
उत्थाप्य नाद्य पर्य्यङ्कमारोहेति किमुच्यते २०२ नाद्य पश्यामि ते छत्रं भृङ्गारमथवा पुनः चामरं व्यजनञ्चापि को
ऽयं विधिविपर्य्ययः २०३ यस्याग्रे व्रजतः पूर्व्वं राजानो भृत्यतां गताः स्वोत्तरीयैः कुर्व्वन्ति नीरजस्कं महीतलं २०४
सोऽयं कपालसंलग्नघटीघटनिरन्तरे मृतनिर्म्माल्यसूत्रान्तगूढकेशे सुदारुणे २०५ वसानिस्यन्दसंशुष्कम-
हीपुटकमण्डिते भस्माङ्गारार्द्धदग्धास्थिमज्जसंघट्टभीषणे २०६ गृध्रगोमायुनादार्त्तनष्टक्षुद्रविहङ्गमे ।
चिताधूमातितिरुचा नीलीकृतदिगन्तरे २०७ कुणपास्वादनमुदासंप्रहृष्टनिशाचरे चरत्यमेध्ये राजेन्द्र श्मशाने
दुःखपीडितः २०८ एवमुक्त्वा समालिङ्ग्य कण्ठं राज्ञो नृपात्मजा कष्टशोकशताधारा विललापार्त्तया गिरा ।
२०९ राजपत्न्युवाच राजन् स्वप्नोऽथ तथ्यं वा यदेतन्मन्यते भवान् तत्कथ्यतां महाभाग मनो वै मुह्यते मम २१०
यद्येतदेवं धर्म्मज्ञ नास्ति धर्म्मे सहायता तथैव विप्रदेवादिपूजने पालने भुवः २११ नास्ति धर्म्मः कुतः सत्यमा-
र्ज्जवं चानृशंसता यत्र त्वं धर्म्मपरमः स्वराज्यादवरोपितः २१२ इति तस्या वचः श्रुत्वा निःश्वस्योष्णं सगद्गदं ।
कथयामास तन्वङ्ग्या यथा प्राप्तः श्वपाकता २१३ रुदित्वा सापि सुचिरं निःश्वस्योष्णञ्च दुःखिता स्वपुत्र-
मरणं भीरुर्यथावृत्तं न्यवेदयत् २१४ राजोवाच प्रिये न रोचये दीर्घं कालं क्लेशमुपासितुं नात्मायत्तश्च तन्वङ्गि
पश्य मे मन्दभाग्यतां २१५ चण्डालेनाननुज्ञातः प्रवेक्ष्ये ज्वलनं यदि चण्डालदासतां यास्ये पुनरप्यन्यजन्मनि
२१६ नरके च पतिष्यामि कीटकः कृमिभोजनः वैतरण्यां महापूयवसासृक्स्नायुपिच्छिले २१७ असिपत्र
वने प्राप्य च्छेदं प्राप्स्यामि दारुणं तापं प्राप्स्यामि वा प्राप्य महारौरवरौरवौ २१८ मग्नस्य दुःखजलधौ पारः
प्राणवियोजनं एकोऽपि बालको योऽयमासीद्वंशकरः सुतः २१९ मम दैवाम्बुवेगेन मग्नः सोऽपि बलीयसा ।
कथं प्राणान् विमुञ्चामि परायत्तोऽस्मि दुर्गतः २२० अथवा नार्त्तिनालिङ्ग्यो नरः पापमवेक्षते तिर्य्यक्त्वे नास्ति त-
द्दुःखं नासिपत्रवने तथा २२१ वैतरण्यां कुतस्तादृग्यादृशं पुत्रविप्लवे सोऽहं सुतशरीरेण दीप्यमाने हुताशने ॥
२२२ निपतिष्यामि तन्वङ्गि क्षन्तव्यं कुकृतं मम अनुज्ञाता च गच्छ त्वं विप्रवेश्म शुचिस्मिते २२३ मम वाक्यञ्च तन्-

न्वङ्गि निबोधा हत मानसा यदि दत्तं यदि हुतं गुरवो यदि तोषिताः २२४ परत्र सङ्गमो भूयात् पुत्रेण सह वन्द्य या इह लोके कुतस्त्वेतद्वि विद्यते समे ङ्गितम् २२५ त्वया सह मम श्रेयोगमनं पुत्र मार्गणो यन्मया हसता किञ्चिद् हस्ये वा शुचि स्मिते २२६ अश्लीलमुक्तं तत सर्वं सन्तव्यं मम याचतः राजपत्नीति गर्वेण नावज्ञेयः सतेद्विजः सर्व्वे यत्नेन ते तोष्यः स्वामि देव तव शुभे २२७ राजपत्न्युवाच अहमप्यत्र राजेन्द्र दीप्यमाने हुताशने दुःख भारा सहा द्यैव सह यास्यामि वै त्वया २२८ पक्षिण ऊचुः ततः कृत्वा चितां राजा आरोप्य तनयं स्वकं भार्य्यया सहितश्चा सौ बद्धाञ्जलि पुटस्तदा २२९ चिन्तयन् परमात्मानमीशं नारायणं हरिं हृत कोटर गुहासीनं वासुदेवं सुरेश्वरं अना दि निधनं ब्रह्म कृष्णं पीताम्बरं शुभं २३० तस्य चिन्त्यमानस्य सर्वे देवाः सवासवाः धर्म्मं प्रमुखतः कृत्वा समाजग्मु स्त्वरान्विताः २३१ आगत्य सर्वे प्रोचुस्ते भो भो राजन् शृणु प्रभो अयं पितामहः साक्षाद्धर्म्मश्च भगवान् स्वयं २३२॥ साध्याश्च विश्वे मरुतो लोकपालाः सवाहनाः नागाः सिद्धाः सगन्धर्व्वा रुद्राश्चैव तथाश्विनौ २३३ एते चान्ये च बह वो विश्वामित्रस्तथैव च विश्वत्रयेण यो मित्रं कर्तुं न शकितः सुरः २३४ विश्वामित्रस्तु ते मैत्रीमिष्टञ्चाहर्तुमिच्छति आरुरोह ततः प्राप्तो धर्म्मः शक्रोऽथ गाधिजः २३५ धर्म्म उवाच मा राजन् साहसं कार्षीर्धर्म्मोऽहं त्वामुपागतः तिति क्षा दमसत्याद्यैः स्वगुणैः परितोषितः २३६ इन्द्र उवाच हरिश्चन्द्र महाभाग प्राप्तः शक्रोऽस्मि तेऽन्तिके त्वया सभार्य्यः पुत्रेण जिता लोकाः सनातनाः २३७ आरोह त्रिदिवं राजन् भार्य्यापुत्रसमन्वितः सुदुष्प्रापं नरैरन्यैर्जितमा त्मीयकर्म्मभिः २३८ पक्षिण ऊचुः ततोऽमृतमयं वर्षमपमृत्यु दिनाशनं इन्द्रः प्रासृजदाकाशाच्चितास्थानगतः प्रभुः २३९ पुष्पवर्षञ्च सुमहद्देव दुन्दुभि निस्वनं ततस्ततो वर्त्तमाने समाजे देवसंकुले २४० समुत्तस्थौ ततः पुत्रो राज्ञस्तस्य महात्मनः सुकुमार तनुः सुस्थः प्रसन्नेन्द्रिय मानसः २४१ ततो राजा हरिश्चन्द्रः परिष्वज्य सुतं क्षणात् सभा र्य्यः स्वश्रिया युक्तो दिव्य माल्याम्बरान्वितः २४२ सुस्थः सम्पूर्ण हृदयो मुदा परमया युतः बभूव ततः क्षणादिन्द्रो भूयश्चैनमभाषत २४३ सभार्य्यस्त्वं सपुत्रश्च प्राप्स्यसे सद्गतिं परां समारोह महाभाग निजानां कर्म्मणां फलैः २४४ हरिश्चन्द्र उवाच देवराजाननुज्ञातः स्वामिना श्वपचेन वै अगत्वा निष्कृतिं तस्य नारोक्ष्येऽहं सुरालयं २४५ धर्म्म उवाच ॥

स्वल्पकालमिमे वयं नेच्छामः स्व भवच्छन्दं द्रष्टुं सिंहासने विभो ४३ मार्कण्डेय उवाच इत्येवं तैस्स-
मान्यैश्च द्विजैः पौरपुरःसरैः भूपभृत्यैरमात्यैश्च प्रोक्तः शोकः पुनः पुनः ४५ वनवासविनिर्बन्धं नोपसंहरते
यदा सामिव्यत्य न कोनेति ददाति च तथोत्तरं ४६ ततोऽमात्याश्च भृत्याश्च पौरवृद्धास्तथा द्विजाः
समेत्य मन्त्रयामासुः किमत्र क्रियतामिति ४७ तेषां मन्त्रयतां विप्र निश्चयोऽयमजायत अनुरागवता
तत्र महीपालेऽतिधार्मिके ४८ समस्तध्यानपरा भूत्वा प्रार्थयामः समाहिताः तपसाराध्य भास्वन्त-
मायुरस्य महीपतेः ४९ तत्रैकनिश्चयाः कार्य्ये केचिद्देहे च भास्करं सम्यगर्घ्योपचाराद्यैरुपहारैरपूज-
यन् ५० अपरे मौनिनो भूत्वा ऋग्यजुःसामभिस्तथाऽपरे यजुषा सम साम्नाञ्च तोषयाञ्चक्रिरे रविं ॥ ५१ ॥
अपरे च निराहारा नदीपुलिनशायिनः तपसा चक्रुरपरे भास्कराराधनं द्विजाः ५२ अग्निहोत्रपरा-
श्चान्ये रविसूक्तान्यहर्निशं जेपुस्तत्रापरे तस्थुर्भास्करेन्यस्तदृष्टयः ५३ इत्थं ते मतिनिर्बन्धं भास्कराराध-
नं प्रति बहुप्रकारं चक्रुस्ते तत्र विधिसुपाश्रिताः ५४ तथानुयततां तेषां भास्कराराधनं प्रति सुदामा
नाम गन्धर्वः उपगम्येदमब्रवीत ५५ यद्याराधनमिष्टं वो भास्करस्य द्विजातयः तदेतत् क्रियतां येन भानुः
प्रीतिमुपैष्यति ५६ तस्मात्कुरु विशालाख्यं वनं सिद्धनिषेवितं कामरूपमहाशैले गम्यतामचिरेण
तु ५७ तस्मिन्नाराधनं भानोः क्रियतां सुसमाहितैः सिद्धक्षेत्रं हि तत्र सर्व्वकामानवाप्स्यथ ५८
मार्कण्डेय उवाच इति ते तद्वचः श्रुत्वा गत्वा तत्काननं द्विजाः ददृशुर्भास्वतस्तत्र पुण्यमायतनं शुभं
५९ तत्र ते नियताहारा दशांविशादयो द्विज भूप पुष्पोपहाराद्यां पूजां चक्रुरतन्द्रिताः ६० पुष्पानु-
लेपनाद्यैश्च धूपगन्धादिकैस्तथा जपहोमान्नदीपाद्यैः पूजनन्ते समाहिताः कुर्वन्तस्तुष्टुवुर्देवं विव-
स्वन्तं द्विजातयः ६१ ब्राह्मणा ऊचुः देवदानवयक्षाणां ग्रहाणां ज्योतिषामपि तेजसाभ्यधिकं देव
प्रणामं आस्ताः रविं ६२ दिवि स्थितं च देवेशं द्योतयन्तं समन्ततः वसुधामन्तरिक्षञ्च व्याप्नुवन्तं मरीचि-
भिः ६३ आदित्यं भास्करं भानुं सवितारं दिवाकरं पूषाणमर्यमाणञ्च स्वर्भानुं दीप्तदीधितिं ॥ ६४ ॥

चतुर्युगान्त कालाग्नि दुष्प्रेक्ष्यं प्रलयान्तगं योगीश्वर मनन्तं च रक्तं पीतं सितासितं ६५ ऋषीणामग्निहोत्रेषु
यज्ञ देवेष्ववस्थितं अक्षरं परमं गुह्यं मोक्षद्वार मनुत्तमं ६६ छन्दोभिरश्वरूपैश्च सकृद्युक्तै विहङ्गमे उदया
स्तमनेयुक्तं सदा मेरोः प्रदक्षिणो ६७ अनृतञ्च ऋतञ्चैव पुण्य तीर्थं पृथग्विधं विश्वस्थितिमचिन्त्यञ्च
प्रपन्नाः स्म प्रभाकरं ६८ यो ब्रह्मा यो महादेवो यो विष्णुर्यः प्रजापतिः वायुराकाश मापश्च पृथिवी गिरि
सागराः ६९ ग्रहनक्षत्र चन्द्राद्या वानस्पत्यं द्रुमौषधं व्यक्ताव्यक्तेषु भूतेषु धर्माधर्म प्रवर्तकः ७० ब्राह्मी
माहेश्वरी चैव वैष्णवी चैव ते तनुः त्रिधा यस्य स्वरूपन्तु भानोर्भास्वान् प्रसीदतु ७१ यस्य सर्व्वमनस्येद मङ्ग
भूतं जगत्प्रभोः सनः प्रसीदतां भास्वान् जगतो यश्च जीवनं ७२ यस्यैकं भास्वरं रूपं प्रभामण्डल दुर्दृशं॥
द्वितीय मैन्दवं सौम्यं सनो भास्वान् प्रसीदतु ७३ ताभ्याञ्च यस्य रूपाभ्यामिदं विश्वं विनिर्मितं अग्नीषो
ममयं भास्वान् सनो देवः प्रसीदतु ७४ मार्कण्डेय उवाच इत्थं स्तुत्या तदा भक्त्या सम्यक् पूजयतान्तया।
तुतोष भगवान् भास्वान् स्वभिमानैर्द्विजोत्तम ७५ ततः समण्डलाद्देवं निजबिम्बसमप्रभः अवतीर्य्य
तदा तस्यां दुर्दृशो दर्शनं रविः ७६ ततस्ते स्पष्ट रूपं तं सवितारमजं जनाः पुलकोत्कम्पिनो विप्रा भक्तिन-
म्राः प्रणेमिरे ७७ नमो नमस्तेऽस्तु सहस्ररश्मे सर्व्वस्य हेतुस्त्वमशेषकेतुः पाता त्वमीड्योऽखिलयज्ञ
धामध्येयस्तथा योगविदां प्रसीद ७८ इति श्री मार्कण्डेय पुराणे भानुस्तवः १०९ मार्कण्डेय उवाच॥
ततः प्रसन्नो भगवान् भानुस्तानाह खिलं जनं व्रियतां यदभिप्रेतं मत्तः प्राहु हिताद्यः १ मार्कण्डेय उवाच
ततस्ते प्रणिपत्योचुर्विप्र विप्रादयो जनाः समाख्य समप्रीतां शुभवल्लोक्य पुरः स्थितं २ ततस्ते प्रणिपत्यो
चुर्वरदं जगदीश्वरं भगवन् यदि नो भक्त्या प्रसन्नोऽसि गिरापह ३ दश वर्ष सहस्राणि ततो नो जीवतां नृपः
निरामयो जितारातिः सुकोशः स्थिरयौवनः दशवर्ष सहस्राणि जीवतां राज्यवर्द्धनः ४ मार्कण्डेय उवाच
तथेत्युक्त्वा जनान् भास्वान् दुर्दृशोऽभून्महामुने तेऽपिलब्धवरा हृष्टाः समाजग्मुर्जनेश्वरं ५ यथा वृत्तञ्च
ते तस्मै नरेन्द्रायन्यवेदयन् वरं लब्धा सहस्रांशोः सकाशादखिलं द्विज ६ तच्छ्रुत्वा मह्यै तस्य सा पत्नी।

२५०

(आनिनी)

مارکنڈے پران

दिष्ट्या
मानिनी द्विज सच राजा चिरं दध्यौ नाह किञ्चिच्च तं जनं ७ ततः सा मानिनी भूपं हर्षा पूरित मानसा
नाह किञ्चिन्मही पाल ऽयुथा मही पाल वर्द्ध स्वेत्याह तं पतिं ८ तथा तया मुदा भर्त्ता मानिन्याथ सभाजितः
कस्मान्न हर्षमस्येषि परमाभ्युदये नृप १० श्चिन्ता जडमना द्विज ९ सापुनः प्राह भर्त्तारं चिन्तया नमधो मुखं
किन्तु तत्कारणं दश वर्ष सहस्त्राणि निरुजः स्थिर यौवनः भावी त्वमद्य प्रभृति किं तथापि न हृष्यसे ११
कथमभ्युदयो भद्रे ब्रूहि यच्चिन्ता कृष्ट मानसः परमाभ्युदये ऽपित्वं संप्राप्ते पृथिवी पते १२ राजोवाच
दश वर्ष सहस्त्राणि जीविष्याम्य किं सभाजयसे च मां प्राप्तो दुःख सहस्त्राणां किं सभाजन यिष्यते १३
हमेकक: नत्वे तव विपत्तौ मे किन्न दुःखं भविष्यति १४ पुत्रान् पौत्रान् प्रपौत्रां श्च तथान्या निष्ट बान्धवान्
भद्रे दुःखम पारं पश्य तो मे सुतान् दुःखं किमल्पं हि भविष्यति १५ भृत्येषु चाति भक्तेषु मित्र वर्गे तथा मृते
तेमरिष्यन्त्यहं भोगी जीविष्यामीति धिक्कं मे भविष्यति तु सन्ततं १६ येमदर्थं तपस्तप्तं कुर्वो धर्म निरन्तरैः
मानिन्युवाच १७ सेयमापद्गरा गेहे प्राप्ता नाभ्युदयो मम कथं वा मन्यसे न त्वं यत्स भाजयसे ऽद्य मां १८
एवं गते ऽद्य किं महाराज यथात्थ त्वं तथैव नात्र संशयः मया पौरै श्च दोषो ऽयं प्रीत्या नालोकितस्तव १९
राजोवाच उपकारः कृतः कार्य्यो नरनाथ विचिन्त्यतां नान्यथा भावि यत्त्वाह प्रसन्नो भगवान्र विः २०
सो ऽहमद्य प्रभृत्या [illegible] पौरैः प्रीत्या भृत्यै श्चयो मम कथं भोक्ष्याम्यहं भोगान् गत्वा तथा म नस्कृतिं २१
दश वर्ष सहस्त्राणि यथाहं स्थिर गत्वा नियत मानसः तपस्तप्स्ये निराहारो भानो राराधनोद्यतः २२
तथा यदि प्रजाः सर्व्वाः भृत्यास्त्व ञ्च सुताश्च ये यौवनः तस्य प्रसादाद्देवस्य जीविष्यामि निरामयः २३
ततो ऽहं [illegible] पुत्राः पौत्राः प्रपौत्रा श्च सुहृदश्च वरानने २४ जीवन्त्येतं प्रसादेनः करोति भगवान्र विः
तपस्तप्स्ये निराहारो याव [illegible] राज्ये सौख्य भोगां स्तथा मुदा २५ न चेदेवं करोत्यर्कस्त दङ्गे तत्र मानिनि
जगाम तेन च समं सा [illegible] वित संशयः २६ मार्कण्डेय उवाच इत्युक्त्वा सा तदा तेन तथेत्याह नराधिपं
धरणी धरं २७ सतदायतनं गत्वा भार्यया सह पार्थिवः भानोराराधनञ्चक्रे शुश्रूषा निरतो द्विज ॥ [illegible]

निराहारा यताहारा च यथा सो पृथिवी पतिः तेपे तपस्तथैवोग्रं प्रीतस्तावात पञ्चमा २९ तस्य पुत्रस्तयोर्भानु-
तप्यत स्तनयो महत् सार्ग्रे संवत्सरे याते ततः प्रीतो दिवाकरः ३० समस्त भृत्य पौरादि पुत्रार्थी च ततो हि-
ज ददौ यथा भिलषितं वरं द्विजवरोत्तम ३१ लब्ध्वा वरं स नृपतिः समस्थैत्यात्मनः पुरं चकार मुदितो ऽ
राज्यं प्रजा क्षेमेरा पालयन् ३२ ईजे यज्ञान् स च बहून् ददौ दानान्य हर्निशं मानिन्या सहितो भोगान्बु-
भुजे च स धर्मवित् ३३ दशवर्ष सहस्राणि पुत्र पौत्रादिभिः सह भृत्यैः पौरैः समुदितः सो ऽभवत्स्थि-
रयौवनः ३४ तस्येति चरितं दृष्ट्वा प्रमतिर्नाम भार्गवः विस्मया क्रान्त हृदयो गाथामेतामगायत ॥३५॥
भानु भक्ती रहो शक्ति र्यदृग्या राज्य वर्द्धनः आयुषो वर्द्धने जातः स्वजनस्य तथात्मनः ३६ इति ते कथितं
विप्र यत्पृष्टो ऽहं त्वया विभो आदिदेवस्य माहात्म्य मादित्यस्य विवस्वतः ३७ विप्रस्तदखिलं श्रुत्वा भा-
नो र्माहात्म्य मुत्तमं पठं श्च मुच्यते पापैः सप्त रात्र कृतैर्नरः ३८ आरोगी धनवानाढ्यः कुले महति धी ऽ
सतां जायते च महा प्राज्ञो यश्चैतद्धारयेद्बुधः ३९ मन्त्रा श्रये ऽत्राभिहिता भास्वतो मुनिसत्तम जाय-
त्स्वैक मेलधा जिसन्ध्यं पातका पहः ४० समस्त मे तन्माहात्म्यं यत्र चायतने रवेः पठ्यते तत्र भगवान् ऽ
सान्निध्यं न विमुञ्चति ४१ तस्मादेतत्त्वया ब्रह्मन् भानो र्माहात्म्य मुत्तमं धार्यं मनसि जाप्यं च मह-
त्पुण्याय संभीप्सता ४२ सुवर्णशृङ्गीं मति शोभनाङ्गीं पयस्विनीं गां प्रददाति यो हि शृणोति चैतन्न्यह
मात्मवान्नरः समं तयोः पुण्य फलं द्विजाग्र्य ४३ इति श्री मार्कण्डेय पुराणे भानोर्माहात्म्यं समाप्तं
११० मार्कण्डेय उवाच एवं प्रभावो भगवाननादि निधनो रविः यस्य त्वं क्रोष्टुके भक्त्या माहात्म्यं परि-
पृच्छसि १ परमात्मा स योगानां युञ्जतां चेतसां लयं क्षेत्रज्ञः सांख्य योगानां यज्ञेशो यज्विनामपि २
सर्व्वाधिकारं वहतो विष्णोरंशस्य वेधसः मनुस्तस्याभवत्पुत्र छिन्न सर्वार्थसंशय ३ मन्वन्तराधि-
पो विप्र यस्य सप्त म मन्तरं इक्ष्वाकु र्नाभगो रिष्टो महा बल पराक्रमाः ४ नरिष्यन्तो ऽथ नाभागः पृष-
ध्रो धृष्ट एव च एते पुत्रा मनोस्तस्य पृथग्राज्यस्य पालकाः ५ विख्यात कीर्तयः सर्व्वे सर्व्वे शस्त्रास्त्र

पारगा विशिष्टं तर मन्विच्छन् मनुः पुत्रं तथा पुनः ६ मित्रावरुणयोरिष्टिं चकार कृतिनां वरः यत्र चाप हुते॥
होतुरपचारान्महामुने ७ इला नाम समुत्पन्ना मनोः कन्या सुमध्यमा तां दृष्ट्वा कन्यकां तत्र समुत्पन्नां ततो
मनुः ८ तुष्टाव मित्रावरुणौ वाक्यञ्चेदमुवाच ह भवत्प्रसादात्तनयो विशिष्टो मे भवेदिति ९ कृते मखे॥
समुत्पन्ना तनया मम धीमतः यदि प्रसन्नौ वरदौ तदियन्तनया मम १० प्रसादाद्भवतोः पुत्रो भवत्वति गु-
णान्वितः तथेति चाभ्यामुक्ते तु देवाभ्यां सैव कन्यका ११ इला सम भवत् सद्यः सद्युम्न इति विश्रुतः पुन
श्चेश्वर कोपेन मृगव्या मदतावने १२ स्त्रीत्वमासादितन्ते न मनु पुत्रेण धीमता पुरूरवस नामानं चक्रिव-
र्तिन मूर्जितं १३ जनयामास तनयं यत्र सोम सुतो बुधः जाते सते पुनः कृत्वा सोऽश्वमेधं महाक्रतुं १४
पुरुषत्त्व मनुप्राप्तः सुद्युम्नः पार्थिवोऽभवत् सुद्युम्नस्य त्रयः पुत्रा उत्कलो विनयो गयः १५ पुरुषत्वे महा
वीर्य्यास्त्विनः पृथुलौजसः पुरुषत्वे तु ये जातास्तस्य राज्ञस्त्रयः सुताः १६ बुभुजुस्ते महीमेतां धर्मे निय-
तचेतसः स्त्रीभूतस्य तु यो जातस्तस्य राज्ञः पुरूरवाः १७ न स लेभे मही भागं यतो बुधसुतो हि सः ततो



वशिष्ट वचनात्त प्रतिष्ठानं पुरोत्तमं तस्मै दत्तं स राज्ञा भूत्त्वातीव मनोहरं १८ इति श्री मार्कण्डेय पुरा-
णे वंशानुक्रमो नाम १११ मार्कण्डेय उवाच पृषध्राख्यो मनोः पुत्रो मृगव्यामगमद्वनं तत्र चंक्रम
माणोऽसौ विपिने निर्जने वने १ नाससाद मृगं कञ्चिज्ज्ञातु दीधितितापितः सुत्तृट्तापपरीताङ्गः इत
श्चेतश्च चंक्रमन् २ सददर्श तदा तत्र होमधेनुं मनोहरां नेतावतानसम्बद्धां ब्राह्मणस्याग्निहोत्रिणः ३
ससन्यमानो गवयमिषुणा ताम ताडयत् पपात सापितद्वाणा विभिन्नहृदया भुवि ४ ततोऽग्निहोत्रि-
णः पुत्रो ब्रह्मचारी तपोरतिः उपगवान् स पितुर्दृष्ट्वा होमधेनुं निपातितां ५ गोपालः प्रेषितः पुत्रो वा
भ्रव्यो नाम नामतः कोपामर्ष पराधीनचित्तवृत्तिस्ततो मुने ६ चुकोप विगलत्स्वेदजललोलाविलक्षणः
तं क्रुद्धं प्रेक्ष्य स नृपः पृषध्रो मुनिदारकं ७ प्रसीदेति जगौ कस्मात् शूद्रवत् कुरुषे रुषं नक्षत्रियं नवा वै-
श्य मेवं क्रोध सुपैति वै यथा त्वं शूद्रवज्जातो विशिष्ट ब्रह्मणः कुले ८ मार्कण्डेय उवाच इति निर्भ

स्थितस्तेन स राज्ञो मौलिन: सुत: प्राप्नोषि दुरात्मानं शुक्र एव गमिष्यति १८ प्रयास्यति स्वयं ब्रह्म यत्ते
ऽधीतं गुरोर्मुखात् होमधेनुर्मम गुरोर्थं दिव्ये द्विजिना त्वया १९ सर्वे शप्तो नृप: क्रुद्धस्तं चापपरिपीडित:
प्रति शापपरो विप्र तोयं जग्राह पाणिना २१ सोऽपि राज्ञो विनाशाय कोपसंरक्तो द्विजोत्तम: समभ्येत्य
त्वरायुक्तो वारयामास वै पिता २२ वत्सालं सत्तमत्यर्थं कोपेनायासदीपिता मोहिकामुष्मिकहित:।
शाम एव द्विजन्मनां २३ कोपस्तपोनाशयति क्रुद्धो भ्रश्यत्यपि सुख: क्रुद्धस्य गलते ज्ञानं क्रुद्धश्चार्थाच्च
हीयते २४ न धर्म: क्रोधशीलस्य नार्थं न्यज्ञा शीलरोषिणा: नालं सुखाय कामाश्च: कोपेन विष्टचेतसां
२५ यदि राज्ञा हता धेनुरियं विज्ञानिना सता युक्तमत्र स्यां कर्तुमात्मनो हितवादिना २६ अथवाऽज्ञा-
नता धेनुरियं व्यापादिता मम तत्कथं शापयोग्योऽथ दुष्टं नास्य मनोगत: २७ आत्मनो हितमन्विच्छन्
बाधते यो ऽपरं नर: कर्त्तव्या मूढ विज्ञाने स्या तत्र दया बुधै: १८ अज्ञानत: कृते दण्डं पातयन्ति बुधा।
यदि बुधेभ्यस्त्वमहं मन्ये वरमज्ञानिनो नरा: १९ नार्हशापस्त्वया देय: पार्थिवस्यास्य पुत्रक स्वकर्मणै-
व पतिता गौरेषा दु:खमृत्युना २० मार्कण्डेय उवाच धृष्टोऽपि मुने: पुत्रं प्रणम्यानम्रकन्धर: ॥
प्रसीदेति जगादोच्चैरज्ञानाद्घातितेति च २१ मया गवयबुद्ध्या गौरवध्या घातिता मुने अज्ञानादो॰
मधेनुस्ते प्रसीद त्वं न्वनो मुने २२ ऋषिपुत्र उवाच आजन्मनो महीपाल: न मया व्याहृतं मृषा क्रोध
श्चाद्य महाभाग नान्यथा मे कदाचन २३ नाहमेनं शक्नोमि शापं कर्तुं नृपान्यथा यत्ते समुद्यत: ।
शापो द्वितीय: स निवर्त्तित: २४ इत्युक्तवन्तं तं बालमादाय स पिता तत: जगाम स्वाश्रमं सोऽपि पृ-
षध्र: शूद्रतामगात् २५ इति श्रीमार्कण्डेयपुराणे पृषध्रोपाख्याने ११२ मार्कण्डेय उवाच कारूषा:
क्षत्रिया: शूरा: करूषस्याभवन्सुता: ते तु सप्त शतानि वीरास्तेभ्य आन्ये सहस्रश: १ दिष्टपुत्रस्तु नाभाग:
स्थित: प्रथमयौवने ददर्श वैश्यतनयामतीव सुमनोहरां २ तस्यां स दृष्टमात्रायां मदनाक्षिप्तमानस:॥
बभूव भूपतनयो नि:श्वासाक्षेपतत्पर: ३ तस्या: स गत्वा जनके वव्रे तां वैश्यकन्यकां ततोऽनङ्गपराधीन

(मती)

मनो हर्त्तिं नृपात्मजं ४ तन्वाह सा पिता तस्या राजपुत्रं कृताञ्जलिः विभ्यत्तस्य पितुर्विप्रा प्रश्रयावनतं वचः
५ भवन्तो भूभुजो भृत्या वयं वः पारवश्यगाः कथं सम्बन्धमस्माभिरभिवाञ्छसि ६ राजपुत्र उवाच
सान्द्यं मानुषदेहस्य काममोहादिभिः कृतं तथापि काले ते रेत योज्यन्ते मानुषं वपुः ७ तथैव चोपकाराय
जायन्ते तस्य तान्यपि अन्यानि चान्ये जीवन्ति भिन्नजातिगताः सतां ८ तथान्यानप्ययोग्यानि योग्यतां
यान्ति कालतः योग्यान्ययोग्यतां यान्ति कालपर्यायभेदतः ९ आप्याय्यते यच्छरीरमाहारादिभि
रीप्सितैः काले ज्ञात्वा तथा भुक्तं तदेव परिखिद्यते १० तुल्यैर्ममाभिमता तनया दीयतां त्वया अन्य-
थास्मच्छरीरस्य विपत्तिः कथ्यतां स्फुटं ११ वैश्य उवाच परतन्त्रा वयं त्वञ्च परतन्त्रो महीभुजः पित्रा तेना
भ्यनुज्ञातस्त्वं कन्यामाददास्यते १२ राजपुत्र उवाच अगम्याः सर्वकार्येषु गुरवो गुरुवर्त्तिभिः नत्वीदृ-
शेषु कार्येषु गुरूणां वाक्यगोचरः १३ क्व नन्दपकथालापो गुरूणां श्रवणे कथं विरुद्धमेतदन्यत्र ।
प्रष्टव्या गुरवो नृणां १४ वैश्य उवाच सत्यमेतत्ततस्त्व राजा पश्य वार्थं पृच्छतो गुरुं अहं पृच्छामि नालापो
मम कामकथाश्रयः १५ मार्कण्डेय उवाच इत्युक्तः सोऽभवन्मौनी राजपुत्रः सचापि तत् तत्पित्रे स-
र्वमाचष्ट राजपुत्रस्य यन्मतं १६ ततस्तस्य पिता विप्रानृचीकादीन् द्विजोत्तमान् प्रवेश्य राजपुत्रञ्च यथा
ख्यातं न्यवेदयत् १७ निवेद्य च ततः प्राह मुनीनेवं व्यवस्थितः यत्कर्तव्यं तदादेष्टुमर्हन्ति द्विजसत्तमाः १८
ऋषय ऊचुः राजपुत्रानुरागस्ते यद्यस्यां वैश्य सन्ततौ तदस्तु धर्मः सर्वेषां किन्तु न्यायक्रमेण सः ॥ १९ ॥
मूर्द्धाभिषिक्ततनया पाणिग्राह्योऽभवत्पुरा भवत्वनन्तरञ्चेयं तव भार्य्या भविष्यति २० एवं न दोषो भ-
वति तथैमां सुप्रभुञ्जतः अन्यथाऽस्येति तेजाति रुत्कृष्टा बालिकां हरन् २१ मार्कण्डेय उवाच इत्यु-
क्तस्तदपास्यैव वचस्तेषां महात्मनां विनिष्क्रम्य गृहीत्वा तां धनुष्पाणिरथाब्रवीत् २२ राक्षसेन विवाहेन
मया वैश्य सुता हृता यस्य सामर्थ्यं मत्रास्ति स एतां मोचयत्विति २३ ततः सवैश्यः स्वां दृष्ट्वा गृहीतां तनयां
द्रुतं त्राहीति पितरं तस्य प्रययौ शरणं द्विज २४ ततस्तस्य पिता क्रुद्धः स्वामादेशं प्रावर्त्तयद्ध हन्यतां हन्यतां

दुष्टो नाभागो धर्मदूषकः २५ ततस्तद्युयुधे सैन्यं तेन भूभृत्सुतेन वै हतं तेनैव तत्सर्वं तत्राचुर्यं भूपाति-
ते २६ स श्रुत्वा निहतं सैन्यं राजपुत्रेण भूपतिः स्वयमेव ययौ योद्धुं स्वसैन्यपरिवारितः २७ ततो युद्धमभूत्त
स्य भूभुजः स्वसुतेन यत् राजपुत्रेण शस्त्रास्त्रैस्तत्रातिशयितः पिता २८ ततोऽन्तरिक्षादागत्य परिव्राट्
सहसा मुनिः प्रत्युवाच महीपालं विरमस्वेति संयुगात् २९ त्वत्सुतस्य महाभाग विधर्मोऽयं महात्मनः॥
तवापि वैश्येन सह न युद्धं धर्मवन्नृप ३० ब्राह्मणो ब्राह्मणीं पूर्वं कुर्व्वन्दारपरिग्रहं ब्राह्मण्यात्सर्व्वतो नु न
हानिमुपगच्छति ३१ तथैव क्षत्रियसुतां क्षत्रियः पूर्व्वमुद्वहन् इतरे च ततो राजन् आवन्ते न स्वधर्मतः॥३२॥
पूर्व्वं वैश्यस्तथा वैश्यां पश्चात् शूद्रकुलोद्भवां न हीयते वैश्यकुलादयं न्यायः क्रमोदितः ३३ ब्राह्मणाः स-
त्रिया वैश्या सवर्णां पाणिसंग्रहं अकृत्वाऽन्यवर्णापाणौ पतन्ति नृपसंग्रहात् ३४ यस्या यस्या हि हीनायाः
कुरुते पाणिसंग्रहं अकृत्वा वर्णसंयोगं सोऽपि तद्वत्तु भागभवेत् ३५ सोऽयं वैश्यत्वमापन्नस्तव पुत्रः स स
न्धीः नास्याधिकारो युद्धाय सन्निवेशात्त्वया सह ३६ नवमेतन्न जानीमः कारणं न्यपनन्दन यथा भवि-
ष्यतीदन्त्वं निवर्त्तस्व कर्मतः ३७ इति श्रीमार्कण्डेयपुराणे नाभागचरिते ११३ मार्कण्डेय उवाच॥
निवृत्तोऽसौ ततो भूपः संग्रामात्स्वसुतेन वै उपयेमे च तां वैश्यतनयां सोऽपि तत्सुतः १ ततः स वैश्यतां प्राप्तः
समुत्पत्याह पार्थिवं भूपाल यन्मया कार्य्यं तन्ममादिश्यतां मम २ राजोवाच धर्माधिकरणे युक्ता वाभ्र
व्या द्यास्तपस्विनः यदस्य कार्य्यं धर्म्माय तद्दत्तु तथा चर ३ मार्कण्डेय उवाच ततस्ते मुनयस्तस्य पाशुपा
ल्यं तथा कार्य्यं वाणिज्यञ्च परं धर्ममाचचक्षुः सभासदः ४ तथा च चक्रे स सुतस्तस्य राज्ञो यथोदितं॥
तेधर्मदादिभिर्धर्मं च्युतस्य निजधर्मतः ५ तस्य पुत्रस्ततो जातो नाम्ना ख्यातो भनन्दनः समात्रा प्रहि
तोऽगच्छन्नोपालो भव पुत्रक ६ मात्रा तथा नियुक्तोऽथ प्रणिपत्य स्वमातरं राजर्षिमगमन्नीपं हिम
वत्पर्व्वताश्रयं ७ तं समेत्य स जग्राह तस्य पादौ यथाविधि प्रणिपत्याह चैवेनं राजर्षिं स भनन्दनः॥८॥
आदिष्टो भगवन्मात्रा गोपालस्त्वं भवेति वै मया च पालनीया क्ष्मा तस्याः स्वीकरणं कथं ९ मया हि



(११३)

गोः पालनीया सा यदा स्वी कृता भवेत आक्रान्ता बलवद्भिः सा दायादैः पृथिवी मम १० तां यथा प्राप्नुयां
पृथ्वीं त्वत्प्रसादादहं विभो तथा दिशा करिष्यामि तवाज्ञां प्रणतोऽस्मि ते ११ मार्कण्डेय उवाच ततः स-
नीयो राजर्षिस्तस्मै निरवशोषतः भनन्दाय ददौ ब्रह्मन्नस्त्रग्रामं महात्मने १२ प्राप्तास्त्रविद्यः स ययौ पितृ
व्य तनयान् द्विजः वसुरातादिकान् पुत्रानादिष्टः स महात्मना १३ अर्थाच तस्य राज्यार्द्धं पित्तं पैतामहो चिते
ते चोचुर्वैश्य पुत्रस्त्वं कथं भोक्ष्यसि मेदिनीं १४ ततस्ते युद्धमभवद्भनन्दस्यात्मवंशजैः वसुरातादिभिः
क्रुद्धैः कृतास्त्रस्यास्त्र वर्षिभिः १५ स जित्वा तान शेषांस्तु शस्त्र विक्षत सैनिकान् जहार पृथिवीं तेभ्यः
धर्मं युद्धेन धर्मवित् १६ स निर्जितारिः सकलां पृथ्वीं राज्यं तथा पितुः निवेदयामास ततस्तत्पिता ज गृहे न
प्रत्युवाच च तं पुत्रं भार्य्यायाः पुरतस्तदा १७ नाभाग उवाच भनन्द राज्यमेतत्ते क्रियतां पूर्व्वजैः कृतं १८
राजोवाच अहं न कृत वान्राज्यं नासामर्थ्य युतः पुरा वैश्यतान्तु पुरस्कृत्य तथैवाज्ञाकरः पितुः १९ कृत्वा
ऽप्रीतिं पितुरहं वैश्यकन्या परिग्रहात नपुराय लोक भाग्गा जायावदाहूतसंप्लवः २० उल्लङ्घ्याज्ञां पुनस्तस्य
पालयामि महीं यदि नास्ति मोक्षस्ततो नूनं मम कल्पशतैरपि २१ न चापि युक्तं त्वद्वाहुनिर्जितं मम मानि
नः राज्यं भोक्तुमनीहस्य दुर्बलस्येह कस्यचित् २२ राज्यं कुरु स्वयं यावद्दायादेभ्यो विमुञ्चवा ममाज्ञापा
लनं शस्तं पितुर्न क्षितिपालनं २३ मार्कण्डेय उवाच ततः प्रहस्य तद्भार्य्या सुप्रभा नाम भाविनी प्रत्यु
वाच पतिं भूप गृह्यतां राज्य मूर्जितं २४ नत्वं वैश्यो न चैवाहं जाता वैश्यकुले नृप क्षत्रियस्त्वं तथैवाहं
क्षत्रियाणां कुलोद्भवा २५ पूर्व्वमासीन्महीपालः सुदेव इति विश्रुतः तस्या भूच्च सखा राज्ञो धूम्राश्वस्य
सुतो नलः २६ स तेन सख्या सहितो जगामाम्रवनं वनं पत्नीभिः स समं रन्तुं माधवे मासि पार्थिव॥ २७॥
ततः पानान्यनेकानि भक्ष्याणि बुभुजे तथा भार्य्याभिः सहितस्ताभिस्तेन सख्या समन्वितः ॥ २८ ॥
ततः पुष्करिणी तीरे ददर्शाति मनोरमां पत्नीं च्यवन पुत्रस्य प्रमतेः पार्थिवात्मजः २९ सखा तस्य नलो
मत्तो जगृहे तां च दुर्मतिः पश्यतस्तस्य राज्ञश्च त्राहि त्राहि इति वादिनीं ३० आक्रन्दितं निशाम्यैव सततस्याः

[illegible]ः पतिः आजगाम त्वरायुक्तः किमेतदिति वै वदन् ३१ ततो ददर्श राजानं सुदेवं तत्र संस्थितं ॥
[illegible] तथा पत्नीं नलेन सुदुरात्मना ३२ ततः सुदेवं प्रमतिः प्राहायं शाम्यतामिति त्वञ्च शास्ता
भवान्राजा दुष्ट आर्य नलो नृप ३३ मार्कण्डेय उवाच तस्या त्तस्य वचः श्रुत्वा सुदेवो नल गौरवात् ॥
आह वैश्यो ऽस्मि गच्छान्यं क्षत्रियं त्राणकारणात् ३४ ततः स प्रमतिः क्रुद्धस्तेजसा निर्दहन्निव प्रत्यु
वाचाथ राजानं वैश्यो ऽस्मीत्यभिभाषितं ३५ प्रमतिरुवाच एवमस्तु भवान् वैश्यः क्षत्रियाः क्षत
रक्षणात् क्षत्रिये धार्यते शस्त्रं नार्त्त शब्दो भवेदिति मत्त्वं न क्षत्रियो भावी वैश्य एव कुलाधमः ॥ ३६ ॥
इति श्री मार्कण्डेय पुराणे नाभाग चरिते ११४ मार्कण्डेय उवाच तस्मै दत्वा ततः शापं नले क्रुद्धो ऽब्र-
वीद्द्विज प्रमति भार्गवः कोपात् त्रैलोक्यं निर्दहन्निव १ मदोन्मत्तो यदा भार्यां भवानत्र ममाश्रमे खला
हृत्वासि भस्म त्वं तस्माद्व्रज तु माचिरं २ तेनोदाहृत मात्रे च वाक्ये तस्मिन् तदानलः देहजेनाग्निनासद्यो
भस्मपुञ्जस्तदा ऽभवत् ३ दृष्ट्वा प्रभावं तत्तस्य सुदेवो विस्मितस्ततः प्रणाम नम्रः प्राहेदं क्षम्यतां क्षम्यता
मिति ४ यदुक्तवांस्त्वं भगवन् सुरापानमदाकुलं तत्क्षम्यतां प्रसीद त्वं शापो ऽयं विनिवर्त्यतां ॥ ५ ॥
एवं प्रसादितस्तेन प्रमतिः प्राह भार्गवः गतकोपो नले दग्धे भावहीनेन चेतसा ६ नान्यथा भावितद्वा-
क्यं यन्मया समुदीरितं तथापि ते करिष्यामि प्रसन्नो ऽनुग्रहं परं ७ भविता वैश्य जातौ यो भवान्नात्र-
त्र संशयः भविता क्षत्रियो वैश्यस्तस्मिन्नेवाशु जन्मनि ८ ग्रहीष्यति बलात् कन्यां यदा ते क्षत्र सम्भवः
तदा त्वं क्षत्रियो वैश्यस्त्व गृहीतो भविष्यसि ९ एवं स वैश्यो भूपाल सुदेवो ऽस्मत्पिता ऽभवत् अहञ्च या
महाभाग तत्सर्वं श्रूयतां त्वया १० सुरथो नाम राजर्षिः प्रागासीद्धन्वमादने तपस्वी नियताहारस्त्यक्त
सङ्गो वनाश्रयः ११ ततः श्येन मुख भ्रष्टां दृष्टुं कां शारिकां भुवि कृपा ऽभूज्जनिता मूर्च्छा तया तस्य महा
त्मनः १२ ततो मूर्च्छावसाने ऽहं तस्यो त्यक्त्वा शरीरतः कृमा दृष्ट्वा च जग्राह स्निह्यमानेन चेतसा ॥ १३ ॥
यस्मात्कृपाभिभूतस्य मम जातेयमात्मजा तस्मात्कृपावती नाम्ना भविष्यत्याह मत्प्रभो १४ ततो ऽस्मा-

अमे तस्य वर्धमाना दिवानिशं सखीभिः सह तुल्याभि र्विचरामि वनानि च १५ ततो मुनेरगस्त्यस्य भ्राता गस्त्य इति श्रुतः स चिन्वन् कानने वन्यं सखीभिः कोपितो ऽशपत् १६ नापराधं कृतवतीं तवाहं द्विजसत्तम अन्यासामपराधेन किमर्थं शप्तवानसि १७ ऋषिरुवाच दुष्टतां दुष्टसंसर्गादुष्टमपि गच्छति सुराबिन्दुनिपातेन पञ्चगव्यघटी यथा १८ प्रणिपत्य न दुष्टास्मि यत्त्वयाहं प्रसादितः तस्मादनुग्रहं बाले शृणु यत्ते करोम्यहं १९ वैश्ययोनौ यदा जाता त्वं पुत्रं बोधयिष्यसि राज्यार्थं जातिस्मरतां तदा त्वं समवाप्स्यसि॥ २० ततो भूयः स्वजातिं प्राप्ता त्वं पतिना सह दिव्यानवाप्स्यसे भोगान् गच्छ भीतिं र्पतुते २१ एवं शप्तास्मि राजेन्द्र तेन पूर्व्वं महर्षिणा पिता च मे पूर्व्वमेवं शप्तः प्रमतिना ऽभवत् २२ एवं वैश्यो न राजा त्वं न च वैश्यः पिता मम न त्वं हि मय्यदुष्टायामदुष्टो दुष्यसे कथं २३ इति श्री मार्कण्डेय पुराणे पञ्चदशाधिकशततमो ऽध्यायः ११५ मार्कण्डेय उवाच इति तस्या वचः श्रुत्वा पुत्रस्य स च पार्थिवः पुनः प्रोवाच। धर्मज्ञस्त्वां पत्नीं तनयस्तथा १ यन्मया पितुरादेशात् त्यक्तं राज्यं न तत्पुनः ग्रहीष्यामि यथोक्तेन किमात्मा ऽक्षिप्यते त्वया २ अहं ते सं प्रदास्यामि करं वैश्यव्रते स्थितः भुङ्क्ष्व राज्यमशेषं त्वमिच्छया वा परित्यज ३ इत्युक्तः स तदा पित्रा राजपुत्रो मनन्दनः चकार राज्यं धर्मेण तद्दारपरिग्रहं ४ अव्याहतं तस्य चक्रं पृथिव्यामभवद्द्विज न चाधर्मे मनो भूपास्तस्य सर्व्वे ऽभवन् वशे ५ तेनेष्टो विधिवद्यज्ञः सम्यक् शास्ति वसुन्धरां स सर्व्वेको ऽभवद्धर्त्ता पृथिव्यां व्याप्तशासनः ६ अजायत सुतस्तस्य वत्सप्री र्नाम नामतः पितातिप्रथितोयेन गुणौघेन महात्मना ७ तस्यापि भार्य्या सौनन्दा विदूरथसुता ऽभवत् पतिव्रता महाभागा सा। प्राप्ता तेन वीर्य्यतः हत्वा पुरन्दररिपुं कुजृम्भं दितिजेश्वरं ८ क्रौष्टुकिरुवाच भगवंस्तेन सं प्राप्ता कुजृम्भनिधनात् कथं एतदाख्यानमाख्याहि प्रसन्नेनान्तरात्मना ९ मार्कण्डेय उवाच विदूरथो नाम नृपः ख्यातकीर्त्तिर्भूद्भुवि तस्य पुत्रद्वयं जातं सुनीतिः सुमतिस्तथा १० एकदा तु वनं यातो मृगयां स विदूरथः ददर्श गर्त्तं सुमहद्भूमे र्मुखमिवोद्गतं ११ तं दृष्ट्वा चिन्तयामास किमेतदिति भैरवं पातालविवरं मन्ये नैतद्भूमे।

मा॰ पु॰
२६०

स्थिरलनं १२ चिन्तयन्निति तत्रासौ ददर्श विजने वने आश्रमं सुव्रतं नाम तपस्विन मुपागतं १३ मतंप-
प्रच्छ च नृपः किमेन दिति विस्मितः अति गाम्भीर सदने दीर्णौ तान्तर्गतोदरं १४ किन्नवेत्सि महीपालवा-
गर्थ स्त्वं हि सि मत: जेय सर्व्वे नरेन्द्रेशा वर्त्तते यन्महीतले १५ दानवः सुमहावीर्य्यो वसत्युग्रो रसातले ॥
सज्जृम्भयति यत्पृथ्वीं कुम्भः प्रोच्यते ततः १६ क्रियते तेन यत्किञ्चित् भूतं महीतले त्रिदिवा-
नर पते तं कथं वेत्ति नो भवान् १७ सुनन्दं नाम मुशलं त्वष्ट्रा यन्निर्मितं पुरा तज्जहार स दुष्टात्मा तेन हन्ति।
सोऽरिपून् १८ पातालान्तर्गतस्तेन भिनत्ति वसुधामिमां ततः सुराणां सर्व्वेषां हाराणि कुरुते ऽसुरः
१९ तेन भिन्नात्र वसुधा सुनन्द मुशला युधा भोक्ष्यते वसुधा मे तां तम जित्वा कथं भवान् २० अज्ञान।
विध्वंसयत्युग्रो देवानामुपरोधकः आप्याय याति दैत्येशान् स बली मुशलायुधः २१ यद्यरिं घातयस्वे-
नं पातालान्तर गोचरं ततः समस्त वसुधा पति स्त्वं परमेश्वरः २२ मुशलन्तस्य बलिनः सौनन्दं प्रोच्यते
जनैः तथा बलाबलं चैव तं वदन्ति विचक्षणाः २३ तत्तु निर्व्वीर्य्यतां याति संस्पृष्टं योषिता नृप तस्मिन्दि-
ने हितीये ऽन्हि वीर्य्यवत्तु दृश्यते २४ न सर्व्वेत्ति दुराचारः प्रभावं मुशलस्य तत् योषित्कराग्र संस्पर्शे दोषं
वीर्य्यं विशातनं २५ सर्व्वं तस्य बलं भूप दानवस्य दुरात्मनः मुशलस्य च ते प्रोक्तं यदुक्तं तत्समाचर २६
आसन्न मे तद्भवतः पुरस्य पृथिवी पते कुतन्नेन महीभर्त्तं निश्चितः किं भवान्यथा २७ इत्युक्तातु गते
तस्मिन् पुरं गत्वा महीपतिः मन्त्रयामास मन्त्रज्ञैः पुर मध्ये तु मन्त्रिभिः २८ यथा श्रुतमशेषन्तत्।
कथयामास मन्त्रिणां मुशलस्य प्रभावन्तु वीर्य्य शातन मेव च २९ तं मन्त्रं क्रियमाणान्तु मन्त्रिभि-
स्तेन भूभृता तत्पार्श्ववर्त्तिनी कन्या शुश्राव च मुदावती ३० ततः कतिपयाहे तु तां कन्यां वयसा-
न्वितां जहाराशु पवनो दैत्यः कुजृम्भः रसातले ह्यतां ३१ ततः श्रुत्वा महीपालः क्रोधपर्य्याकुले-
क्षणः पुत्रावुवाच त्वरितं गच्छतं वनकोविदौ ३२ निर्विन्ध्यायास्तटे गर्त्ते स्तेन गत्वा रसातलं सह-
न्यतां योऽपहर्त्ता मुदावत्याः सुदुर्मतिः ३३ मार्कण्डेय उवाच ततस्तौ गन्तुतो प्राप्य तं गर्त्तं तत्पदानु

२५०

मार्कण्डे

(कि)

गौ युयुधाते कुम्भेन स्वसैन्येनाति कोपितौ ३४ ततः परिघ निस्त्रिंश शक्ति शूल परश्वधैः वाणै
श्चाविरतं युद्धं तयोरासीत सुदारुणं ३५ ततो माया बलवत्ता तेन दैत्येन तावुभौ राजपुत्रौ रणे बद्धौ नि
हतौ शेष सैनिकौ ३६ तत श्रुत्वा स महीपालः प्राहेदं सर्व्व सैनिकान् बद्ध पुत्रः परामार्त्ति मुपेतो मुनि
सत्तम ३७ यस्तौ निहत्य दैतेयं मोच यिष्यति मे सुतौ तस्याहं सं प्रदास्यामि तामेवायत लोचनां ॥३८॥
इत्येवं घोषयामास्य स राजा स्वपुरे तदा निराशः पुत्र तनया बन्ध मोक्षाय वै मुने ३९ ततः शुश्राववत्स
प्री भलन्दन सुतो हितत् आयोज्य मारां बलवान् कृतास्त्रः शौर्य्य संयुतः ४० स चागम्याभिवाद्यैनं
प्राह पार्थिव सत्तमं विनयावनतो भूत्वा पितु र्मित्र मनुत्तमं ४१ आज्ञापयाऽस्मा भेव तनयौ मोचयामि
ते तेनैव तेजसा हत्वा री दैत्यं तनया न्वितं ४२ मार्कण्डेय उवाच ततं मुदा परिष्वज्य प्रिय सख्युः स्यात्म
जं वात्सल्या लिलि ले सिरवेत्र त्याह स पार्थिवः ४३ स्थाने स्था स्यति मे वत्स यत्वेवं कुरुते विधिं वत्से
तत्क्रियतामा शुद्युत्साहि मनस्तव ४४ मार्कण्डेय उवाच ततः स खड्गः सधनु र्बद्ध गोधाङ्गुलि त्रवा
न् जगाम वीरः पातालं तेन गर्त्तेन सत्वरः ४५ ततो ज्यास्वन मत्युग्रं स चक्रे पार्थिवात्मजः येन पाताल
मखिल मासीदा पूरितान्तरं ४६ ततो ज्यास्वन माकर्ण्य कुजृम्भो दानवेश्वरः आजगामाति कोपेन
स्व सैन्य परि वारितः ४७ ततो युद्ध मभूत्तस्य तेन पार्थिव सूनुना ससैन्यस्य ससैन्येन बलिनो बलशा
लिना ४८ दिनानि त्रीणि स यदा योधितस्तेन दानवः ततः कोप परीतात्मा मुशलाय भ्यधावत ॥
४९ गन्धै र्माल्यैस्तथा धूपैः पूज्यमानः सतिष्ठति अन्तः पुरे महाभाग प्रजापति विनिर्मितः ५० ततो
विज्ञात मुशल प्रभावा सा मुदावती पस्पर्श मुशल श्रेष्ठ मति नम्र शिरोऽधरा ५१ पुनर्यावत्त मग्रहा
ति मुशलं तं महासुरः तावत्सा वन्दन व्याजात् पस्पर्शानेकशः शुभा ५२ ततः स गत्वा युयुधे
मुशलेनासुरेश्वरः व्यर्थो मुशल पातास्ते सं जज्ञुस्ते युधात्युधु ५३ परमास्त्रे तु निर्वीर्य्ये सोनन्दे सु
पाले मुने अस्त्रैः शस्त्रै श्च दैत्य यः सोऽयुध्य तरणोऽरिणा ५४ शस्त्रा स्त्रैर्न समस्त स्य राजपुत्रस्य सो

ऽसुरः मुशलेन जलन्तस्य तच्च कुध्या निराहतं ५५ ततः मर्ब्बाजित्य स भूप सूनु रवर्ग्गाणि शस्त्राणि च दान।
वस्य चकार सद्यो विरथं ततश्च स चर्म्मखड्गः पुनरप्यधावत् ५६ तमापतन्तं रभसा ऽसुराणां विसृष्टकोप
पेत्रिदशेन्द्र शत्रु शस्त्रेण वन्हे र्भुवि राजपुत्रो जघान कालानलसुप्रभेन ५७ स पावकास्त्रेण हृदि क्षतो।
भृशं तत्याज देहं त्रिदशारिरात्मनः बभूव सद्यश्च महोरगाणां रसातलान्तेषु महानथोत्सवः ५८ ततो
ऽपतत् पुष्पवृष्टिर्महीपालसुतोपरि जगुर्गन्धर्व्व पतयो देववाद्यानि सस्वनुः ५९ सचापि राजपुत्रस्तं
हत्वा तौ नृपतेः सुतौ मोचयामास तन्वङ्गीं ताञ्च कन्यां मुदावतीं ६० तज्ज्ञापि मुशलं तस्मिन् कुजृम्भे
विनिपातिते जग्राह नागाधिपतिरनन्तः शेषसंज्ञितः ६१ तस्याश्च परितुष्टो ऽसौ शेषः सर्व्वोरगेश्वरः सुरा
वत्या मुदाध्यातमनो वृत्तिस्तपोधनः ६२ सुनन्द मुशलस्पर्शो यच्चकार पुनः पुनः योषित् करतलस्पर्श
प्रभाव ज्ञाति शोभना ६३ सुदावत्यास्ततो नाम नागराजस्तदा करोत् सुनन्दामिति सानन्दं सोनन्दं गुण
जं द्विज ६४ सचापि राजपुत्रस्तां भ्रातृभ्यां सहितां पितुः समीपमानिनायाशु प्रणिपत्याह चेवतं ६५
श्चानीतौ तनयौ तात तथैवेयं मुदावती तवाज्ञया मया न्यद्यत् कर्त्तव्यं तत्समादिश ६६ मार्कण्डेय उवाच
ततः प्रहर्षसम्पूर्ण हृदयः स महीपतिः साधु साध्विति तथा होश्चैर्व्वत्सवत्सेति शोभनं ६७ सभाजितो
ऽस्मि त्रिदशैर्व्वत्साहं कारणो स्तिभिः त्वं यामाता च यत्स्वातो यश्चारिर्व्विनिपातितः ६८ आगतान्यस
तान्यत्रयत्नापत्यानि मे पुनः तत्कृताणाद्य ग्रस्ते ऽन्हि पाणिमस्या मयोदितं ६९ त्वं राजपुत्र चार्व्वङ्ग्याः
कन्या या दुहितुर्मम मुदावत्या सुरायुक्तः सत्यवाक्यं कुरुष्व मां ७० राजपुत्र उवाच तात स्याज्ञामया
कार्य्या यद्ब्रवीषि करोमि तत् त्वमेव तात जानीषे ने दाता विकत्ता वयं ७१ मार्कण्डेय उवाच ततस्तयोः
सराजेन्द्र श्चक्रे वैवाहिकं क्रमं मुदावत्याश्च दुहितुर्भनन्दनसुतस्य वै ७२ ततः सहतयारेमे वत्सश्रीर्नवयौ
वनः रम्यणीयेषु देशेषु प्रासादशिखरेषु च ७३ कालेन गच्छता वृद्धः पितातस्य भनन्दनः वनं जगाम।
वत्सश्रीः सच भूव महीपतिः ७४ इयाज यज्ञान् सततं प्रजा धर्म्मेण पालयन् पुत्रवत् पाल्यमानास्तु प्रजा



(६)

مارکنڈے پران

नदस्तु व्याल दुर्वृत्त भय मासीन्न कस्यचित् ॥
स्तेन महात्मना ७५ वहस्तु विषये तस्य न चाभूद्वर्ण सङ्करः
नोप सर्ग भय ञ्चैव तस्मिन् शासति भूपतौ ७६ इति श्री मार्कण्डेय पुराणे भलन्दन वत्सप्री चरित्तं नाम ११७
मार्कण्डेय उवाच तस्य तस्यां सुनन्दायां पुत्रा द्वादश जज्ञिरे प्रांशुः प्रवीरः शूरश्च सुचक्रो विक्रमः क्रमः
१ बली बलाक श्चण्ड श्च प्रचण्ड श्च सुविक्रमः स्वरूप श्च महाभागाः सर्व्वे संग्राम जित्तमाः २ तेषां
ज्येष्ठो महा वीर्य्यः प्रांशुरासीन्नराधिपः इतरे भृत्य वत्तस्य व भूवुर्व्वश वर्त्तिनः ३ तस्य यज्ञे द्विजत्यक्तो
रनैकैर्द्रव्य राशिभिः न्यून वर्णा विसृष्टे च सत्य नाम्ना वसुन्धरा ४ सम्यक् पालयत स्तस्य प्रजाः पुत्रानि-
वौरसान् यो ऽभूद्धन चयः कोशो तेन निष्पादिता स्तु ये ५ क्रतवः शत साहस्रा स्तेषां संख्या न विद्यते ॥
अयुता युत कोटी भिर्न च पद्मादि भिर्मुने ६ प्रजाति स्तस्य पुत्रो ऽभूद्यस्य यज्ञेषु शत क्रतुः श्लाघ्य त्वमि-
मतुलां यत्र भागैः सुरैः सह ७ दानवानां सुवीर्य्याणां जघान न बली नैव वलञ्च वलिनां श्रेष्ठो नभश्च
सुर सत्तमे ८ अन्या श्च सुमहा वीर्य्या नाजघानामर द्विषः प्रजाते स्तनयाः पञ्च खनित्र प्रमुखा मुने ९
तेषां खनित्रो राजा भूत् प्रख्यातो निज विक्रमैः सुशान्तः सत्यवाक् शूरः सर्व्व प्राणि हिते रतः ॥ १० ॥
स्व धर्म्मा भिरतो नित्यं वृद्ध सेवी बहु श्रुतः वाग्मी विनय संपन्नः कृत्तास्त्रो ऽप्य विकत्थनः ११ सर्व्व लो-
क प्रियो नित्य मुवाचेत दहर्निशं नन्दन्तु सर्व्व भूतानि स्निह्यन्तु विजने ष्वपि १२ स्वस्त्य स्तु सर्व्व भूतेषु
निरातङ्का नि सन्तु च माव्याधिर स्तु भूतानामाधयो न भवन्तु च १३ मैत्रीम शेष भूतानि पुष्यन्तु सक-
ले जने शिव मस्तु द्विजाती नां प्रीतिर स्तु परस्परं १४ समृद्धिः सर्व्व वर्णानां सिद्धिरस्तु च कर्मणां ते-
लोकाः सर्व्व भूतेषु शिवा वो ऽस्तु सदा मतिः १५ यथात्मनि तथा पुत्रे हित मिच्छ थ सर्व्वदा तथा समस्त
भूतेषु वर्त्त ध्वे हित वुद्धयः १६ एतद्वो हित मत्यन्तं को वा कस्या परा ध्यते यत्त करोत्य हितं किञ्चित कस्य
चिन्मूढ मानसः १७ तं समभ्येति तन्न्यूनं कर्त्त गामि फलं यतः इति मत्वा समस्तेषु भो लोकाः कृत्त बु-
द्धयः १८ सन्तु मा लौकिकं पापं लोकाः प्राप्स्यथ वैबुधाः यो मे ऽद्य स्निह्यते तस्य शिव मस्तु सदा भुवि

२५३

यस्य मां हेति तेषां ॥ स्मिन् सोऽपि भद्राणि पश्यतु सर्वे स्वरूप: पुत्रो ऽभूत एव निः॥ भूपते: २० समस्त गुण सम्पन्न: श्रीमानञ्चले सरा: तेन ते भ्रातर: प्रीत्या पृथग्राज्येषु योजिता: २१ स्व च न्व पृथिवी मेतां बुभुजे सागराम्बरां प्राच्यां तेन कृत: शौरिर्दक्षिणाया सुदा वसु: २२ दिशि प्रतीच्यां सुनय उत्तरस्यां महारथ: तेषां तस्य च भूपस्य पृथक् कोशा: पुरोहिता: २३ बभूवु सुनय श्चैव नान्वि॥ गता: शौरेः र्षि कुलोद्भूत: पुरो नाम वै द्विज: २४ उदावसो: कुशावर्त्तो गौतमान्वयजो भवत् काश्यप: प्रमतिर्नाम सुनयस्य पुरोहित: २५ महारथस्य वाशिष्ठ: पुरोधा ऽभून्महीभृत: बुभुजुस्ते स्वराज्यानि चत्वारोऽपि नराधिपा: २६ खनित्र श्चाधिपत्येनान शेष वसुधाधिप: तेषु भ्रातृष्व शेषेषु खनित्र: स महीपति: २७ प्रजासु च समस्तासु पुत्रेष्विव सदा हित: एकदा मन्त्रिणा शौरि: स प्रोक्तो विजनवेदिना २८ विविक्ते पृथिवी पाल किञ्चिद्द क्तव्य मस्ति न: यस्येयं पृथिवी कृत्स्ना यस्य भूपा वशानुगा: २९ स राजा तस्य पुत्रश्च तत्पौत्रा श्चान्वय कृत: इतरे भ्रातरस्तस्य प्राकल्प विधया धिया: ३० तत्पुत्र श्चाल्पकस्तस्मात् तत्पौत्रा श्चाल्पका स्थिका: कालेन ह्रास मासाद्य पुरुषात् पुरुषान्तरं ३१ कृष्योपजीविनो भूप भवन्तीति तदन्वया: नोद्धारं कुरुते भ्राता भ्रातृस्नेह बलात्परा: ३२ स्नेहक: पृथिवी पाल परयोर्भ्रातृपुत्रयो: तत्पुत्रयो: परतरा मतिर्भवति पार्थिव ३३ तत्पुत्र: केन कार्य्येण प्रीतियुक्तो भविष्यति अथवा येन तेनैव सन्तोषं कुरुते नृप: ३४ क्रियते तत् किमर्थन्तु नृपे नैन्त्व परिग्रह: भुज्यते सकलं राज्यं मया ते मन्त्रिणा सता ३५ तत् किं सुरवा क्षारयसे सन्तोषं कुरुते यदि कार्य्यं निष्पादकं राज्यं करणं कर्त्तुरिष्यते ३६ राज्य लुब्ध श्च ते कार्य्ये त्वं कर्त्ता करणं वयं सोऽस्माभि: करणे राज्यं पितृपैतामहं कुरु फलप्रभावि ष्याम: परलोके न ते वयं ३७ राजोवाच ज्येष्ठो राजा महीपाल वयन्त स्यानुजायत: तत: स भुंक्ते पृथिवीं वयन्त्वाल्प वसुन्धरां ३८ वयन्तु भ्रातर: पञ्च पृथ्वी चैका महामते अतोऽस्या: पृथगैश्वर्य्यं कथं कृत्स्नं भविष्यति ३९ विप्रश्चैनमुवाच एवमेतद्भवांस्तत्र यच्चैका वसुधा नृप तांत्वमेवाभिपद्य स्वज्येष्ठ

शास्तु महीं भवान् ४० सर्व्वाधिपत्यः सर्व्वेभ्यो भवत्व मखिलेश्वरः यतन्ते च यथा ऽहन्ते तेषामाहित ॥
मन्त्रिणः ४१ राजोवाच ज्येष्ठो राजा यथा प्रीत्या भजते ऽस्मान् सुतानिव कथं तस्य करिष्यामि मम
त्वं जगती गतं ४२ विश्ववेद्युवाच राज्य स्थितः पूज्यथा ज्येष्ठो भूपार्हणैर्नवैः कनिष्ठ ज्येष्ठता कथं ।
राज्यं प्रार्थयतो नृणां ४३ मार्कण्डेय उवाच तथेति च प्रतिज्ञाते भूभुजा तेन सत्तम विश्ववेदी ततो ।
मन्त्री तद्भ्रात्हननयद्वशं ४४ तेषां पुरोहितो श्चैव आत्मनः शान्तिकादिषु नियोजयामास ततः खनित्र
स्याभिचारके ४५ विभेद तस्य निभृतान् साम दानादिभिस्तथा चक्रे च परमो द्योगं निजराड्प्रवाधने ॥
४६ आभिचारिकमत्युग्रमहन्यहानि कुर्वतां पुरोधसां चतुर्णाञ्च जज्ञे कृत्या चतुष्टयं ४७ विकरालं म-
हावक्त्रमतिभीषणदर्शनं समुद्यत महा शूलं प्रभूत मति दारुणं ४८ ततस्तदा गतन्तत्र खनित्रो यत्र
पार्थिवः निरस्त ञ्चाप्य दुष्टस्य तस्य पुण्यचयेन तत् ४९ कृत्या चतुष्टयन्तेषु निपपात दुरात्मसु पुरो-
हितेषु भूपानां तथा वै विश्ववेदिनि ५० ततो निहन्त्या निर्दग्धाः कृत्यया ते पुरोहिताः विश्ववेदी तथा ।
मन्त्री सभ्रात्दुष्टमन्त्रदः ५१ इति श्री मार्कण्डेय पुराणे खनित्र चरित्रे ११८ मार्कण्डेय उवाच ततः
समस्त लोकस्य विस्मयः सो ऽभवन्महान् यदेक काले न शुक्ले पृथक् पुरनिवासिनः १ ततः शुश्राव निधनं
यातान् भ्रात्त पुरोहितान् मन्त्रिणञ्च तथा भ्रातुर्दग्धंतं विश्ववेदिनं २ किमेतदिति सो ऽतीव विस्मितो
मुनिसत्तम खनित्रो भून्महाराजो ना जानात तच्च कारणं ३ ततो वशिष्ठं पप्रच्छ स राजा गृहमागतं यत्का-
रणं विने शुक्ते भ्रात्त मन्त्रि पुरोहिताः ४ तेन पृष्टस्तदा प्राह यथा वृत्तं महा मुनिः यच्छौरि मन्त्रिणा प्रोक्तं
यच्च शौरि रुवाचतं ५ यथा चानुष्ठितन्ते न भ्रात्हणां भेदकारिवै मन्त्रिणा तेन दुष्टेन यच्चक्रुश्च पुरोहिताः
६ यन्निमित्तं विने शुक्ते अपापस्यापकारिणः पुरोहितास्तस्य राज्ञः शान्त्रावयिदया पर ७ स तच्छ्रुत्वा त
तो राजा हा हतो ऽस्मीति वै वदन् निनिन्दात्मानमत्यर्थं वशिष्ठ स्याग्रतो द्विज ८ राजोवाच धिङ्मामः
पुण्यसंस्थानमल्पभाग्यमशोभनं देवदोषकृतं पापं सर्व्वलोक विगर्हितं ९ तन्निमित्तं विनष्टं यत्त भ्रात्-

या चतुष्टयं मत्तः कोऽन्यः पापतरो भविष्यति कुमानृ भुवि १० नाभविष्यं यदि त्वमानह मत्र महीतले॥
ततस्ते न विनश्येयुर्मम भ्रातृ पुरोहिताः ११ धिग्राज्यं धिक् च मे जन्म भूभुजो महतां कुले कारणं त्वंग-
तोयोऽहं विनाशस्य द्विजन्मनां १२ कुर्वन्तः स्वामिनोऽर्थे भ्रातृणां मम याजकाः नाशं ययुर्नेदुष्टा
त्तदुष्टोऽहं नाश कारणं १३ किं करोमि क्व गच्छामि नान्यो मत्तोऽस्ति पापकृत् पृथिव्यामस्ति हेतुत्वं
द्विजनाशस्य योगतः १४ इत्थं सुदुःखितहृदयः खनित्रः पृथिवी पतिः वनं यियासुः पुत्रस्य कृतवान
भिषेचनं १५ अभिषिंच्य सुतं राज्ये क्षुप संज्ञं मही पतिः भार्य्याभिस्तिसृभिः सार्द्धं तपसे स वनं ययौ॥
१६ तत्र गत्वा तपस्तेपे वानप्रस्थ विधान वित् शतानि त्रीणि वर्षाणां सार्द्धानि नृप सत्तम १७ तपसा
क्षीण देहस्तु राजवर्य्यो द्विजोत्तम निगृह्य सर्व्व श्रोतांसि तत्याज असून् वनचरः १८ ततः सुरायान
ययौ लोकान् सर्व्व कामदुहोऽक्षयान् अश्वमेधादिभिर्यज्ञैरवाप्या ये नराधिपैः १९ भार्य्याश्च तस्य
तास्तिस्त्रः समन्ते नैव तत्यजुः प्राणान् चापुः समा लोकं तेनैव सुमहात्मना २० खनित्र चरितं
श्रुतं कल्मष नाशनं पठतश्च महाभाग क्षुपस्यातो निशामय २१ इति श्री मार्कण्डेय पुराणे ख-
नित्र चरितं समाप्तं ११९ मार्कण्डेय उवाच क्षुपः खनित्र पुत्रस्तु प्राप्य राज्यं यथा पिता तथैव पा-
लयामास प्रजा धर्मेण रञ्जयन् १ स दानशीलो यष्टा च यज्ञानाम् वनीपतिः समः शत्रौ च मित्रे च व्यव-
हारादिवर्त्मनि २ एकदा स मही पालो निजस्थान गतो मुने सूतैरुक्तो यथा पूर्व्वं क्षुपो राजा तथाऽभ-
वत् ३ ब्रह्मणस्तनयः पूर्व्वं क्षुपोऽभूत् पृथिवी पतिः यादृक् चरितमस्यासीत्तादृक् तस्यैव चेष्टितं॥४॥
राजोवाच श्रोतुमिच्छामि चरितं क्षुपस्य सुमहात्मनः यदि तादृक्क्षया शक्यं चेष्टितुं तत्करोम्यहं ५
सूता ऊचुः स चकार करान् भूप राजा गो ब्राह्मणान् पुरा षष्ठांशेन कृता चोर्व्या मिष्टिस्तेन महात्मना
६ राजोवाच तेषां महात्मनां राज्ञां कोऽनुयास्यति मद्विधः तथापुत्कृष्ट चेष्टानां चेष्टा सूच्यमवान
भवेत् ७ तत् श्रूयतां प्रतिज्ञाया सांप्रतं क्रियते मया क्षुपस्यानुकरिष्यामि महाराजस्य चेष्टितं॥ ८॥

त्रींस्त्रीन यज्ञान् करिष्यामि शस्यापाते गतागते   पृथिव्याञ्च तुरगाां यां प्रतिज्ञेयं कृता मया ॥ ९ ॥
यज्ज्व गोब्राह्मणाः पूर्व्वमददन् भूभृते करं   तमेव प्रति दास्यामि ब्राह्मणानां तथा गवां ११ मार्कं-
ण्डेय उवाच   इति प्रतिज्ञाय वचः सुपस्तत्वात्तवांस्तथा   शस्यापाते स यज्ञांस्त्रीनयजद्यजतांवरः॥
११ गोब्राह्मणाः पुरा राज्ञा मदद्यच्चैव करं   तावत्तं स्वयमदाहित्तमन्थको ब्राह्मणाय सः १२ तस्य
पुत्रोऽभवद्वीरः प्रमथायाम निन्दितः   तस्य प्रताप शौर्याभ्यां कृता वश्या मही भृतः १३ तस्यापि
नन्दिनी नाम वैदर्भी दयिताऽभवत्   विविंशं तनयं तस्यां जनयामास स प्रभुः १४ विविंशे शासति
महीं महीपाले महौजसि   महीतलमभूद्व्याप्तं निरन्तरं तथा नरैः १५ ववर्ष काले पर्जन्यो मही शस्यव-
तीतथा   सुफलानि च शस्यानि रसवन्ति फलानि च १६ रसाः पुष्टिकरा ह्यासन् पुष्टिर्नोन्मादकारिणी
नवित्तनिचयान्नराणां प्रभूता मदहेतवः १७ तस्यातापेन रिपवो भयमापुर्महामुने   स्वास्थ्यं जनः सु
हृद्गोमुदमिच्छन्ति पौरिकाः १८ इष्ट्वा स यज्ञान् सुबहून् सम्यक् सम्पाल्य मेदिनीं   संग्रामे निधनं
प्राप्य स्वर्गलोकमितो गतः १९ इति श्री मार्कण्डेय पुराणे विविंशचरितं समाप्तं १२० मार्कण्डेय उवा-
च   तस्य पुत्रः खनीनेत्रो महाबलपराक्रमः   यस्य यज्ञेष्व गायन्त गन्धर्व्वा विस्मयान्विताः १ खनीनेत्र स-
मो नान्यो भुवि यज्वा भविष्यति   तेन यज्ञायुते पूर्णे दत्ता पृथ्वी ससागरा २ दत्वा च सकलां पृथ्वीं ब्राह्मणा-
नां महात्मनां   तपसा द्रव्यमासाद्य मोचयत साधिते नयः ३ यत्त च प्राप्य वित्तं हि मतुलां दाद सत्तमात्
जगृहुर्ब्राह्मणा विप्र नान्यराज्ञः प्रतिग्रहं ४ सप्तयष्टि सहस्राणि सप्तयष्टि शतानि च   सप्तयष्टि श्चयोय-
ज्ञानयजद्भूरिदक्षिणान् ५ अपुत्रः स महीपालो मृगयामुपचक्रमे   पुत्रार्थं पितृयज्ञाय मांसकामो महा
मुने ६ अश्वारूढो विना सैन्यमेक एव महावने   बद्ध गोधाङ्गुलित्राणो बाणखड्गधनुर्धरः ७ ते वाह य-
न्ते तुरगमन्यतो गहनाद्वनात्   विनिष्क्रम्य मृगः प्राह मां हत्वाभिमतं कुरु ८ राजोवाच   अन्ये मृगाः
पलायन्ते महाभीत्या विलोक्य मां   कथमात्म प्रदानं त्वं मृत्यवे कर्त्तुमिच्छसि ९ मृग उवाच   अपुत्रो

ऽहं महाराज वृथा जन्म प्रयोजनं विचारयन्न पश्यामि प्राणानामिह धारणं १० मार्कण्डेय उवाच ॥
अथाश्येत्य मृगः प्राह तमन्यो वसुधाधिपं मृगस्य तस्य प्रत्यक्ष मलमेतेन पार्थिव ११ घातयस्वेति मां
मांसैर्मम कर्म समाचर यथा कृतार्थता तेस्यान्मम चाप्युपकारितत् १२ पुत्रार्थी त्वं महाराजस्त्वपितृन्यष्टु
मिच्छसि अपुत्रस्यास्य मांसेन लप्स्यसे वाञ्छितं कथं १३ यादृक् कर्म विनिर्व्याच्यं तादृक् द्रव्य मुपाहरेत्
दुर्गन्धैर्न सुगन्धानां गन्धज्ञान विनिर्णयः १४ राजोवाच वैराग्य कारणं प्रोक्तमनेनापुत्रता मम कथ्य
तां प्राणसंत्यागे यत्ते वैराग्य कारणं १५ मृग उवाच वहवो मे सुता भूप वह्व्यो दुहितरस्तथा यच्चिन्ता
दुःख दावाग्नि ज्वाला मध्ये वसाम्यहं १६ सर्व्वे साध्या नरेन्द्रेयं मृगजातिः सुकातरा तेश्च पत्येषु मे चा-
ति ममत्वं तेन दुःखितः १७ मनुष्य सिंह शार्दूल वृकादिभ्यो विभेम्यहं नहीनात् सर्व्वसत्त्वेभ्यः श्वश्वगा-
लादपि प्रभो १८ सोऽहं निमित्तं वन्धूनामिमां शून्यां वसुन्धरां नृसिंहादि भयात् सर्व्वां मिच्छामि सुभृशं
सकृत् १९ हरिणान्यन्येऽपि स्वादन्ति गोऽजाविलुरगादिकाः तांस्तेषां पोषणायाहमिच्छामि निधनं
गतान् २० निष्क्रान्तेषु ततस्तेषु ममापत्येषु वै पृथक् भवन्ति चिन्ताः शतशो ममत्वाहृतचेतसः ॥ २१ ॥
किं कूटपाशं किं वज्रं वागुरां किं सुतो मम प्राप्त श्चरन् वने किंवा नृसिंहादिवशंगतः २२ प्राप्तोऽयमेकः
संप्राप्तास्तेऽवस्थां कीदृशीं मम साम्प्रतं विचरन्तो दैवगताः सुमहावनं २३ दृष्ट्वा प्राप्त समाभ्यास मह-
न्तानात्मजान्नृप ईषदुच्छ्वसितः सेम मिच्छामि रजनीं पुनः २४ प्रभाते दिवसं सेमम स्तमर्केनिशामपि
वाञ्छाम्यहं कदा सेमं सर्व्वकालं भविष्यति २५ एतत्ते कथितं भूप ममोद्वेगस्य कारणं अतः प्रसादं
कुरु मे वाणोऽयं पात्यतां मयि २६ इति दुःखगताविष्टः प्राणानपित्यजानियत् तत्कारणं निबोध त्वं
ब्रुवतो मम पार्थिव २७ असूर्य्या नाम ते लोका यान् गच्छन्त्यात्मघातकाः यज्ञोपयुक्ताः पशवः संप्रया
न्त्युच्छ्रितीः प्रभो २८ अग्निः पशुरभूत पूर्व्वं पशुराशी ज्वलाधिपः भास्वानथोच्छ्रितीः प्राप्तो यज्ञेनि-
ष्ठामुपागतः २९ तन्मे तां कृपां कृत्वा नय मामुच्छ्रितिं नृप आत्मनश्चेप्सितं कामं पुत्रलाभादवा॰

प्यसि ३० पूर्व्वे मृगा उवाच राजेन्द्र नैषहन्तव्यो धन्यो ऽयं सुकृती मृगः बहव स्तनया यस्य हन्तव्यो
ऽहम सन्तति: ३१ उत्तर मृगा उवाच एक देह भवं यस्य दुःखं धन्यः सवे भवान् बहूनि यस्य देहानि त
स्य दुःखान्यनेकधा ३२ एको यदाह मासन्तु प्राक् तदा देह जं मम दुःखमासीन्मम त्वे तु भार्य्या यास्त
द भूद्विधा ३३ यदा जातान्य पत्यानि तदा यावन्ति तानि वै तावच्छरीर भूमीनि मम दुःखान्यथा भवन् ३४
न कृतार्थो भवान् यस्य नास्ति दुःखाय सम्भवः इह दुःखाय मत्सूतिः परत्रे च विरोधिनी ३५ यतोऽस्मत्
पोषणार्थ मपत्यानां करोमि तत् चिन्तया मि च सम्भूति स्तेनमे नरके ध्रुवा ३६ राजो वाच नवेद्मि किंसन्त
ति मान् धन्यो ऽपुत्रो ऽत्र किं मृग पुत्रार्थ श्चाय मारम्भो मम दोलायते मनः ३७ दुःखाय सन्ततिः सत्य
मे हिकामुष्मिकाय तत् तथाप्यनृणवान् यान्ति नराणानीति श्रुतं मया ३८ सो ऽहंयतिष्ये पुत्रार्थ मृते
प्राणिवधं मृग तपसैव प्रचण्डेन यथा पूर्व्वे मही पतिः ३९ इति श्री मार्कण्डेय पुराणे खनीनेत्र
चरितं नाम १२१ मार्कण्डेय उवाच ततः सन्नृपति र्गत्वा गोमतीं पाप नाशिनीं तत्र तुष्टाव नियतो
भूत्वा देवं पुरन्दरं १ तप्य मानस्त पश्चोग्रंयत वाक्काय मानसः तुष्टाव प्रयतः शक्रम पत्यार्थे मही-
पतिः २ तस्य स्तोत्रेण तपसा भक्त्या चापि सुरेश्वरः तुतोष भगवानिन्द्रः प्राह चैनं महामुने ॥ ३ ॥
अनेन तपसा भक्त्या स्तोत्रेणोच्चारितेनच परितुष्टो ऽस्मि ते भूप व्रियतां भवतावरः ४ ॥ राजो वाच ॥
अपुत्रस्य सुतो मे ऽस्तु सर्व्व शस्त्र भृतांवरः सदा चाव्याहतै श्वर्य्यो धर्म्म कृद्दर्श वित्त कृती ५ मार्कण्डेय
उवाच तथेति चोक्तः शक्रेण राजा प्राप्त मनोरथः प्रजाः पालयितुं भूप आजगाम निजंपुरं ६ तत्रास्य
कुर्व्वतो यज्ञं सम्यक् पालयतः प्रजाः अजायत सुतो विप्र तदा शक्र प्रसादतः ७ तस्य नाम पिता
चक्रे बलाश्व इति भूपतिः अस्त्र ग्रामम शेषञ्च ग्राहयामास तं सुतं ८ पितर्य्युपरते विप्र सो ऽधि-
राज्ये स्थितो नृपः स बलाश्वो वशं निन्ये भुवि सर्व्वमही क्षितः ९ करञ्च दापयामास सार ग्रहणा पू-
र्व्वकं स सर्व्व भूमि पान् राजा पालयामास च प्रजाः १० अथाखिल नरेन्द्रा स्ते दायादा स्तस्य दुर्मदाः॥

न चाभ्युत्थाय सततं ते चास्मै प्रददुः करान् ११ व्युत्थिताः स्वेषु राष्ट्रेषु न सन्तोष्य पराल्ततः सुवं तस्य।
नरेन्द्रस्य जगृहुस्ते नराधिपाः १२ स गृहीत्वास्य के राज्यं पृथिवीं गोवलान्मुने तस्थौ स्वनगरे भूपे विरो
धो वहुभिः कृतः १३ समेत्य सु महावीर्य्याः स साधन वला स्ततः रुरुधुस्ते मही पालं पुरे तत्र नरेश्वराः
१४ पुररोधेन ते नाथ कुपितः स मही पतिः स्वल्प कोशो ऽल्प दण्ड श्च वैक्लव्यं परमं गतः १५ अपश्य
मानः शरणं सवलो द्विजसत्तम करौ मुखाग्रतः कृत्वा निशश्वासार्त्त मानसः १६ ततो ऽस्य हस्त।
विरदा न्मुखानिल समाहताः निजग्मुः शत्रु योधार थनागतुरङ्ग माः १७ ततः संगीन तत्सर्व्वं।
नगरं तस्य भूपतेः व्याप्त मासीद्वलौघेन सारेणाति वलान्मुने १८ अथ सो ऽतिवलौघेन महता तेन
सम्वृतः निर्गम्य नगरात्तस्मात्तान् विजिग्ये नराधिपः १९ जित्वा च वश मानीय चकार करदान् पुनः॥
यथा पूर्व्वं महाभाग महाभागो नरेश्वरः २० धुतयोः करयोर्जज्ञे यतस्तस्यारि दाहदं वलं करन्धम।
स्तस्मात् स वलाश्वो ऽभिधीयते २१ स धर्म्मात्मा महात्मा च समैत्रः सर्व्व जन्तुषु करन्धमो ऽभवद्
पश्चि सु लोकेसु विश्रुतः २२ सम्प्राप्तस्य परामार्त्तिं ददावरि विनाशनं वलन्धर्म्मेणा चाक्षिप्त मभ्युपे-
त्य स्वयं नृपं २३ इति श्री मार्कण्डेय पुराणे करन्धम चरितं समाप्तं १२२ मार्कण्डेय उवाच वीर्य्यच-
न्द्रसुता सुभ्रूर्वीरा नाम शुभव्रता स्वयम्वरे सा जगृहे महाराजं करन्धमं १ तस्यां पुत्रं स राजेन्द्रो जनया
मास वीर्य्यवान् अवीक्षित मिति ख्याति सुपैतं जगतीतले २ जाते तस्मिन् सुते राजा स दैवज्ञान पृच्छ-
त कच्चित् प्रशस्त नक्षत्रे शस्त लग्ने सुतो मम ३ कच्चिद्वालो कितं जन्म मम पुत्रस्य शोभनं ग्रहैः क-
च्चिन्न दुष्टानां ग्रहाणां दृक्पथं गतं ४ इत्युक्ता स्तेन दैवज्ञास्त मूचुर्न्नृपतिं ततः प्रशस्ते सुहूर्त्ते नक्षत्रे लग्ने
चैव सुतस्तव ५ समुत्पन्नो महावीर्य्यो महाभागो महावलः भविष्यति महाराज महाराजस्तवात्मजः
६ अवेक्षते मैरेवानंगुरुः शुक्र श्च सप्तमः सोमस्तुर्य्यस्तनयं तवैनं समवेक्षत ७ उपान्त संस्थित श्चैव।
सोम पुत्रो ऽप्यवेक्षत नावेक्षन्ते सवितान भौमोन शनैश्चरः ८ तव पुत्रं महाराज धन्यो ऽयं तनयस्तव॥

सर्व्वे कल्याण सम्पत्ति समं वै तौ भविष्यति ९ मार्कण्डेय उवाच इति दैवज्ञ वचनं निशम्य वसुधाधिप: हर्ष
पूर्ण्णमना: प्राह निज स्थान गतस्तदा १० अवेक्षन्ते न देवानां गुरु: सोमसुतो बुध: नावेक्षते न चादित्यो नार्क
सूनुर्न भूमिज: ११ अवेक्षतेतिय त्प्रोक्तं भवद्भिर्वहुशो वच: अवीक्षितेति तेनास्य ख्यातं नाम भविष्यति
१२ मार्कण्डेय उवाच अवीक्षित: सुतस्तस्य वेद वेदाङ्ग पारग: अस्त्रग्रामम शेषं स कण्व पुत्रादथाग्रही
तु १३ सदृश्य गाति क्षियजो देवानां पार्थिवात्मज: वुद्ध्या वाचस्पतिं कान्त्या शशाङ्कं तेजसा रविं ॥ १४ ॥
धैर्य्येणाब्धिं तथा क्षीं च सहिष्णुत्वेन वीर्य्यवान् शौर्य्येणान समस्तस्य कश्चिदासीन्महात्मन: १५ स्वय
म्बरे तं ज गृहे हेम धर्म्मात्मजा वरा सुदेव तनया गौरी सुभद्रा वलिन: सुता १६ लीलावती वीरसुता वीरभद्र
सुता निभा भीमात्मजा मान्यवती दम्भ पुत्री कुमुद्वती १७ याश्चैवनाभिनन्दन्ति स्वयम्वर कृतक्षणा: ॥
ताश्चापि सवला हीरो जग्राह नृपते: सुत: १८ निराकृत्य नृपान् सर्व्वांस्तासां पितृ कुलानि च स्वकं हि
वीर्य्य माश्रित्य वलवान् सवलोद्धत: १९ एकदातु विशालस्य वैदिशाधिपते: सुतां वैशालिनीं ससुदतीं
स्वयम्वर कृतक्षणां २० परिभूयाखिलान् भूपान् स्वेच्छया न हृतस्तया वलाज्जग्राह विप्रर्षे यशान्त्या
वलगर्व्वित: २१ ततस्ते भू भृत: सर्व्वे वहुशस्तेन मानिना निराकृता: सुनिर्व्विण्णा प्रोचुरन्योन्य माकुला:
२२ समस्तां ललनामेतामेकस्माद्वल शालिनां वहूनामेक वर्णानां जन्म धिग्वो सतो भृतां २३ क्षत्रियो
य: सतत्राणां वध्यमानस्य दुर्म्मदै: करोति तस्य तन्नाम कथं वान्येहि विभ्रति २४ आत्मनोऽपि स तत्रा
णं दुष्टा दस्मात् कुर्व्वतां भवतां क्षत्रिय कुले जातानां की दृशी मति: २५ उच्चार्य्यते स्तुतिश्चान्च सूत
मागध वन्दिभि: मा सत्या सा हथा वीरा भवत्वरि विनाशनात् २६ [illegible]
गन्धैर्: पौरुष्या शालिनां: सर्व्वे विशिष्ट कुलसम्भवा: २७ विभेति कोन समरात् [illegible]
विचिन्त्यै तन्न हातव्यं पौरुषं शस्त्र वृत्तिभि: २८ एतान्नि भाष्यते भूपा [illegible] पूरिता: [illegible]
[illegible] सर्व्वे ससुतस्थु स्वसायुधा: २९ केचिद्रथान् [illegible] केचिन्नागांस्तथा [illegible]

४८।

त्त मुपेताः पदातयः ३० इति श्री मार्कण्डेय पुराणे ऽवीक्षित चरिते १२३ मार्कण्डेय उवाच इति संग्राम सञ्जास्ते भूपा भूप सुतास्तथा निराकृताः सुबहुशस्तत्काल ञ्चाप्यवीक्षिताः १ ततो बभूव संग्रा सस्तस्य तैः सह दारुणः एकस्य बहुभि र्भूपैर्भूप पुत्र वरे मुने २ ते ऽसि शक्ति गदा बाण पाणयस्तं सु दुर्मदाः अभिघ्नन्तो युयुधिरे तैः समस्तैरसावपि ३ सत्तान् शरशतैरुग्रैर्विभेद नृप नन्दनः कृतास्त्रो बलवान् बाणैस्ते च तं विभिदुः स्थिरैः ४ कस्य चिच्चिच्छेद बाहु मन्यस्य च शिरोधरं हृदि विव्याध चै- वान्य मन्यं वक्षस्य ताडयत् ५ कस्य चित्खेट कं शिरस्तुरगस्य तथा शिरः तथान्येषान्तथैवाश्वान्नयस्या न्यस्य सारथिं ६ बाणानापततश्चक्रे द्विधा बाणैस्तथा द्विधा चिच्छेदान्यस्य खड्ग ञ्च धनुरन्यस्य लाघ वात् ७ तनुत्रे ऽपहृते तेन न नाशान्यो नृपात्मजः अवीक्षिता हत श्चान्यः पदातिः प्रजहौ रणं ॥ ८ ॥ इत्याकुली कृते तस्मिन् समग्रे राज मण्डले तस्थुः सप्त शता वीराः मरणे कृत निश्चयाः ९ अभि जा- त्य वयः शौर्य्य वीर्य्य लज्जा समन्विताः निर्ज्जिते सकले सैन्ये पलायन परायणे १० तैः समेत्य मही पालैः स तु पुत्रो मही भृतः युयुधे धर्म्म युद्धेन तेन तेनाति कोपितः ११ विच्छिन्न यन्त्र कवचान् स तानपि महाबलः कर्त्तुं व्यवस्थितस्ते च ततः क्रुद्धा महा मुने १२ धर्म्म मुत्सृज्य युयुधुर्युध्यमानेन धर्म्मतः नरेन्द्र पुत्राः प्रस्वेद जल क्लिन्नाननाः समं १३ विव्याध कश्चि द्बाणौघैः कश्चिच्चिच्छेद कार्मुकं ध्वज मस्याप- रो बाणैश्छित्त्वा भूमाव पातयत् १४ जघ्नुरन्ये तथैवाश्वान् बभञ्जु श्चापरे रथं गदापातेनाथ वान्ये वाणैः पृष्ठ मताडयत् १५ छिन्ने धनुषि स क्रोधः स तदा नृपतेः सुतः जग्राहासिं तथा चर्म्म तदप्यन्येन पातितं १६ छिन्नासि चर्म्मा जग्राह स गदां ग दिनां वरः तामप्यन्यः क्षुर प्रेण चिच्छेद कृत हस्तवत् १७ अन्ये शर सहस्रेण शतेनान्ये नराधिपाः विभिदुः कोष्ट की कृत्य धर्म्म युद्ध पराङ्मुखाः १८ स विह्वलः पपात्तो- र्व्यां मैको बहु भिरर्द्दितः राज पुत्रा महा भागा बबन्धुस्ते च तं ततः १९ तम धर्म्मेण ते सर्व्वे गृहीत्वा नृपतेः सुतं विशालेन समं राज्ञा वैदिशं विविशुः पुरं २० हृष्टाः प्रमुदिता वद्धन्नमादाय नृपात्मजं स्वयम्वरा

च सा कन्यान्यस्ता तेन ततः पुरः २१ पुनः पुनश्चापि प्रोक्ता तथापि च पुरोधसा आलम्भतामिति दोषस्ते
राजसुरोचते २२ यदा सा मानिनी काञ्चिन्न ग्राह वरं मुने तदा पप्रच्छ दैवज्ञं विवाहार्थं नरेश्वरः ॥ २३ ॥
विशिष्टतरं ने तस्या विवाहाय दिनं वद श्रेष्ठे तदोत्सवे संजातं युद्धं विद्येप पार्थके २४ मार्कण्डेय उवाच
इति पृष्टो नरेन्द्रेण स दैवज्ञो विमृश्य तत् दुर्मना श्राह विज्ञात धरमार्थो महीपतिं २५ भविष्यन्त्यपरानी॰
ह दिनानि पृथिवी पते प्रशस्त लग्नयुक्तानि शोभनान्यचिरेणाच २६ करिष्यति विवाहार्थं तेषु प्राप्ते
षु मानद श्रलग्ने तेन यत्नार्थं महाविघ्न उपस्थितः २७ इति श्री मार्कण्डेय पुराणे ऽवीक्षित चरिते १२४
मार्कण्डेय उवाच ततः शुश्राव तं वद्धं तनयं सकरन्धमः तस्य पत्नी तथा वीरा अन्ये चापि महीभृतः॥१॥
तम धर्मेण तनयं वद्धं श्रुत्वा महीपतिः समस्तैः पृथिवी पाले श्चिरन्ध्यो महामुने २ केचिद्नु महीप॰
पाला वध्याः सर्वे महीभृतः येरेकः संयुगे वद्धः समस्तै स्तैरधर्मतः ३ युज्यतां वाहिनी शीघ्रं सूचुरन्ये॰
किमास्यते विशालो वध्यतां दुष्ट स्तत्रये ऽन्ये समागताः ४ अन्ये तथोचुर्धर्मो ऽत्रस्यक्तः पूर्वं महीक्षिते
अन्यायेन वलाद्येन गृहीता तस्य वृञ्छति ५ स्वयम्बरेष्वशेषेषु तेन राजसुतास्तदा खली कृतास्ततः स-
र्वैः समेत्य स वशी कृतः ६ तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती वीरगोत्र समुद्भूता वीरपत्नी प्रहर्षि-
ताः ७ उवाच भर्त्तुः प्रत्यक्ष मन्येषाञ्च महीक्षितां भद्रं कृतं भद्रभुजा मम पुत्रेण पार्थिवाः ८ गृहीता
यद्वलात् कन्या जित्वा सर्वे महीक्षितः तदर्थं युध्यमानो ऽयं युद्धशक्तो न धर्मतः ९ तदप्यसत्सुतस्या
जौ मन्ये नापचयप्रदं एतदेव हि पौरुष्यं यद्धर्म्म वशान्नरः १० नीतिं न गणयत्येवं जिघांसुरिव केशरी
स्वयम्वराय विन्यस्ता मम पुत्रेण कन्यकाः ११ वह्वो गृहीता भूपानां पश्यतामति मानिनां क्षत्रिय
कुले जन्म कथाञ्चाहीन सेविता १२ वलादेव समादत्ते क्षत्रियो वलिनां पुरः लोहशृङ्खलवद्धा वानवशं
यान्ति कातराः १३ प्रसह्य कारिणो यान्ति राजानो धर्मशालिनः तद्वलन्दोर्मनस्येनं श्लाघ्यमेवास्य॰
वन्धनं १४ युष्मा कमप्यायुधानामङ्गं मूर्द्धसु पातनं हत्वैव पृथिवीशानां पृथ्वी पुत्रादिकं वसु १५ भार्या

स्तथा क्रूरो धर्मस्था प्यास्तत: प्रजा: ५६ परिपालनीयमखिलं चातुर्वर्ण्यं स्वधर्मत: हन्तव्यादस्यवो म्लेच्छाये चान्ये दुष्ट चेष्टिता: ५७ यष्टव्यं विविधै र्यज्ञै: समाप्त वर दक्षिणै: वाजिमेधादि भिर्भद्रे वर सहस्रे श्च संख्यया ५८ मार्कण्डेय उवाच तं दृष्ट्वा सा ऽन्तरिक्ष स्थं दिव्यस्त्र गनुलेपनं देव दूत मुवाचे दं राज पुत्री ततो मृदु ५९ सत्यं त्व मागत: स्वर्गा द्देव दूतो न संशय: किन्तु भर्त्रा विना पुत्र: सकथं मे भविष्यति ६० अवीक्षित मृते भर्त्ता मम नान्यो ऽत्र जन्मनि भवितेति प्रतिज्ञातं मये त त्सन्निधौ पितु: ६१ सचनेच्छति मां प्रोक्तो मत्पित्रा जनकेन च कारन्धमे नाथ सम्यक् याचित श्च मया तथा ॥ ६२ ॥ देव दूत उवाच किमनेन महाभागे बहुनोक्तेन ते सुत: समुत्पत्स्यति मात्या सौ स्त्व मात्मान मधर्मत: ६३ अत्रैव कानने तिष्ठ तनुं स्त्रीगाञ्च पोषय तप: प्रभावा देतत्ते सर्व्वं साधु भविष्यति ६४ मार्कण्डेय उवाच इत्युक्त्वा देव दूतो ऽसौ यथा गत मगच्छत चकारानु दिनं सुभ्रू: साप्यात्म तनु पोषणं ६५ इति श्री मार्कण्डेय पुराणे ऽवीक्षित चरिते १२५ मार्कण्डेय उवाच अथ सावीक्षितो माता वीरा वीर प्रजावती पुराये ऽहनि समाहूय प्राह पुत्र मवीक्षितं १ पुत्राह मभ्य नुज्ञाता तव पित्रा महात्मना उपवासं करिष्यामि दुष्करो ऽयं किमिच्छक: २ स चायत्त स्तव पितु स्त्वया साध्यो मयापि च प्रतिज्ञाते त्वया पुत्र ततस्त्वय तास्यहं ३ द्रव्य स्याहं महा कोशात् तव दास्याम्यहं पितु: धनन्ते पितुरायत्त मनुज्ञाता ऽस्मि तेन च ॥ ४ क्लेश साध्यो मदायत्त सहि श्रेयान्भविष्यति साध्यो भवेद्वा यदि ते कश्चिद्बल पराक्रमे ५ मत्ते ऽसाध्यो ह्यन्यथा वा दु:ख साध्यो भविष्यति तत्त्व प्रतिज्ञां कुरुष्व यदि पुत्रा न चैव ते तदेतदहमावाप्स्ये कथ्यतां यन्मतं तव ६ वित्तं मे पितुरायत्तं मामसि त्वं न तत्र वै यन्म च्छरीर निष्पाद्यं तत्करिष्ये त्वयोदितं ७ किमिच्छकं व्रतं मातर्विचिन्ता भव निर्व्यथा राज्ञा पित्रा ऽभ्यनुज्ञातं यदि वित्त श्वरेण मे ८ मार्कण्डेय उवाच तत: सा राज महिषी तद्व्रतं समुपोषिता यथोक्ता सा ऽकरोत पूजां राज राजस्य संयता ॥ ९ ॥ निधीनामप्य शेषाणां निधि पाल गणस्य च लक्ष्म्या श्च परया भक्त्यायत वाक्काय मानसा १० विविक्ते

तु गृहस्थोऽयमथ राजा करन्धमः । आसीन उक्तः सचिवैर्नीति शास्त्र विशारदैः ११ सचिवा ऊचुः राजन्
वयः परिणतन्ते वै न च्छामत्तो मही । एकस्ते तनयोऽवीक्षित्त्यक्त दार परिग्रहः १२ अपुत्रः सचते निधनं
यदा भूप गमिष्यति तदारिपक्षः पृथिवी निश्चितं तव यास्यति १३ वंशक्षयस्ते भविता पितृ पिण्डोद
कक्षयः एतन्महत्ते विघ्नं क्रियाहान्या भविष्यति १४ तस्मात् कुरु तथा भूप यथा ते तनयः पुनः करोति
सततं बुद्धिं पितृणामुपकारिणीं १५ मार्कण्डेय उवाच एतस्मिन्नन्तरे शब्दं शुश्राव जगती पतिः ॥
पुरोहितस्य वीराया गदतो ह्यर्थिनं प्रति १६ कः किमिच्छति दुःसाध्यं कस्य किं साध्यतामिति करन्धम
स्य महिषी किमिच्छक मुपोषिता १७ राजपुत्रोऽप्यवीक्षित्तु श्रुत्वा पौरोहितं वचः प्रत्युवाचार्थिनः स-
र्वान् राजद्वार मुपागतान् १८ मया साध्यं शरीरेण यस्य किञ्चिद्ब्रवीतु सः मम माता महाभागा किमि-
च्छक मुपोषिता १९ शृणवन्तु मेऽर्थिनः सर्वे प्रतिज्ञातं मया तदा किमिच्छथ ददाम्येष क्रीयमाणे कि



मिच्छके २० मार्कण्डेय उवाच ततो राजा निशम्यैतद्वाक्यं पुत्रमुखाच्च्युतं समुत्पत्याब्रवीत् पुत्र महम-
र्थी प्रयच्छ मे २१ अवीक्षिदुवाच दातव्यं यन्मया तात भवते तद्ब्रवीहि मां कर्त्तव्यं दुष्करं वा ते साध्यं
दुःसाध्य मेव वा २२ राजोवाच यदि सत्य प्रतिज्ञस्त्वं ददासि च किमिच्छकं पौत्रस्य दर्शय मुखं म-
मोत्सङ्ग गतस्य तत् २३ अवीक्षिदुवाच अहन्त्वेकस्तनयो ब्रह्मचर्य्यञ्च मे नृप न मे पुत्रोऽस्ति
पौत्रस्य दर्शयामि कथं मुखं २४ राजोवाच पापाय ब्रह्मचर्य्यन्ते यदिदं धार्य्यते त्वया तस्मात् त्वं
मोचयात्मानं मम पौत्रञ्च दर्शय २५ अवीक्षिदुवाच विषमस्या महाराज यदन्यत्तत् समादिश ॥
वैराग्येण मया त्यक्तः स्त्री सम्भोगस्तथा सुतः २६ राजोवाच बहुभिर्युध्यमानानां दृष्टो वै वैरिणां जयः
तत्रापि यदि वैराग्य मुपेषि तद पण्डितः २७ किं वा लोकवहनोक्तेन ब्रह्मचर्य्यं परित्यज मातुस्त्वं किमिच्छ
यावत्त्वं पौत्रस्य मम दर्शय २८ मार्कण्डेय उवाच यदा स बहुभिस्तेन प्रोक्तः पुत्रेण पार्थिवः नान्यत
प्रार्थयते किञ्चित् तदा पुत्रोऽब्रवीत् पुनः २९ दत्वा किमिच्छकं तुभ्यं प्राज्ञो हं तात संकटे तत्वास्मि

स्मि निर्लज्जो भूयो दार परिग्रहे ३० स्त्रियः समक्षं विजितः पतितो धरणीतले स्त्री पतिर्भवितास्म्यस्या निर्वेद

त्ति दुष्करं ३१ तथापि किं करोम्येव सत्य पाशवशङ्कृतः करिष्यामि यथात्थ त्वं मुच्यतां निज शासनं ॥ ३२ ॥

इति श्री मार्कण्डेय पुराणे ऽवीक्षित चरिते सप्त विंशत्यधिक शततमो ऽध्यायः १२७ मार्कण्डेय उवाच ॥

कदाचिद्राज पुत्रो ऽसौ मृगयामचरद्वने मृगान्विध्यन्वराहांश्च शार्दूलादींश्च दक्षिणः १ शुश्राव सहसा

शब्दं त्राहि त्राहीति योषितः विक्रोशन्त्याः सुबहुशो भय गद्गद मुच्चकैः २ माभैर्माभैरिति वदन् राजपुत्रः

सवेगितः चोदयामास तुरगं यतः शब्द समागतः ३ ततश्च सापि चुक्रोश कन्यका विजने वने गृहीता

दनुपुत्रेण दृढकेशेन मानिनी ४ करन्धमसुतस्याहं भार्य्या चाहमवीक्षितः हरत्यनार्य्यो विपिने पृथिवी

शस्य धीमतः ५ यस्य सर्व्वे महीपालास्तथा गन्धर्व्व गुह्यकाः न समर्थाः पुरः स्थातुं तस्य भार्य्या हृता

स्म्यहं ६ यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः करन्धमसुतस्येयं तस्य भार्य्या हृतास्म्यहं ७ मार्क-

ण्डेय उवाच इत्याकर्ण्य महीपाल तनयः सशरासनो चिन्तयामास किमिदं मम भार्य्यात्र कानने ॥

मायेयं रक्षसां नूनं दुष्टानां कानने कसां अथवा गत एवाहं सर्व्वं वेत्स्यामि कारणं ९ त्वरितः स ततो ग-

त्वा ददर्शाति मनोरमां कानने कन्यकामेकां सर्व्वालङ्कार भूषितां १० गृहीतां दनुपुत्रेण दृढकेशेन द-

ण्डिना त्राहि त्राहीति करुणं विक्रोशन्तीं पुनः पुनः ११ माभैरिति स तां चाह हतो ऽसीति च तं वदन् शा

सती मां महीं दुष्टः को भूपे ऽत्र करन्धमे १२ यस्य प्रतापावनता भुवि सर्व्वमहीक्षितः ततस्समागतं दृष्ट्वा

गृहीत वर कार्मुकं १३ मां त्राहीत्याह तन्वङ्गी हृतास्म्येवेति चासकृत् राज्ञः करन्धमस्याहं स्नुषा भार्य्या

प्यवीक्षितः हृतास्म्येतेन दुष्टेन सनाथा नाथवद्वने १४ मार्कण्डेय उवाच ततो विमृश्य वाक्यमवीक्षि

तमनयोदितं कथमेषा हि मे भार्य्या स्नुषा तातस्य वा कथं १५ अथवा मोचयिष्ये तां तन्वीं वेत्स्यामि तत्त

पुनः क्षत्रिये धार्य्यते शस्त्रमार्त्तानां त्राण कारणात् १६ ततः क्रुद्धो ऽब्रवीद्वीरो दानवं तं सुदुर्मतिं जी-

वन्न गच्छ विमुञ्चैनां नान्यथा न भविष्यसि १७ ततः स तां विहायोच्चैर्दण्ड मुत्क्षिप्य दानवः तमभ्यधाव

त्मोऽध्येनं शरवर्षैर्वा किरत्त १८ सर्वाथ्यं सागो वाणौघे दानवोऽतिमदान्वितः राजपुत्राय चिक्षेप स्वाङ्
गाङ्कुशाता हतं १९ तमापतन्तं चिच्छेद शरैर्भूपसुतस्ततः सोऽप्यासन्नं गृहीत्वोच्चैर्द्रुममाजौ व्यवस्थि
तः २० सृजतः शरवर्षाणि तं चिक्षेप ततो द्रुमं सच तन्निलश चक्रे भल्लैः कार्मुकप्रेषितैः २१ ततः
चिक्षेप च शिलां राजपुत्राय दानवः सापि मोघा पपातोर्व्यां मुक्ता तेन लाघवात् २२ राजपुत्राय
कुपितो यद्यच्चिक्षेप दानवः तत्तच्चिच्छेद वाणौघैर्भूपसूनुः सलीलया २३ ततो विच्छिन्नदण्डो
ऽसो विच्छिन्न सकलायुधः मुष्टिमुद्यम्य स क्रोधो राजपुत्रमधावत २४ तस्यापतत एवासौ करन्धमसु
तः शिरः छित्त्वा वत सपत्रेण पातयामास वै भुवि २५ तस्मिन् विनिहते देवे दानवे दुष्टचेष्टिते करन्ध
मसुतः सर्व्वैः साधु साध्विति भाषितः २६ वरं वृणीष्वेति तदा देवैरुक्तो नृपात्मजः देवं पुत्रं महावीर्य्यं
पितुः प्रियचिकीर्षया २७ देवा ऊचुः भविष्यति हि ते पुत्र श्चक्रवर्त्ती महाबलः अस्यामेव हि कन्यायां
सोक्षिता यां त्वयाऽनघ २८ राजपुत्र उवाच पित्राहं सत्यपाशेन बद्ध इच्छाम्यहं सुतां राजभिर्निर्जि
तेनाजौ त्यक्तो मे दारसंग्रहः २९ साच मे याचतीत्यक्ता विशालनृपतेः सुता तयाच मत्कृते त्यक्तोमा
मृत्तेनरसङ्गमः ३० तत्कथं तामपास्याद्य विशालतनयामहं नृशंसानां करिष्यामि अन्यनारी परि
ग्रहं ३१ देवा ऊचुः इयमेव हि ते भार्य्या श्लाघ्यते यात्वया सदा विशालस्य सुता सुभ्रूस्त्वत्कृते याचि
तातपः ३२ तस्यामुत्पत्स्यते वीरः सप्तद्वीपप्रसाधकः यष्टा यज्ञसहस्राणां चक्रवर्त्ती सुतस्तव ॥ ३३ ॥
मार्कण्डेय उवाच इत्युच्चार्य्य ययुर्देवाः करन्धमसुतं द्विज सोऽप्याहत्तां तदा पत्नीं कथ्यतां भीरु किं
त्विदं ३४ सा चास्मै कथयामास त्यक्ताहं भवता यदा त्यक्तबन्धुजनारण्यं निर्वेदात् समुपागता ॥ ३५ ॥
तत्राहं तपसा वीर सैसा प्रस्य कलेवरं त्यक्तुकामा समभ्येत्य देवदूतेन वारिता ३६ भविष्यति च पुत्रस्ते
चक्रवर्त्ती महावलः धीरो यिष्यति यो देवानसुरांश्च हनिष्यति ३७ इति देवाज्ञयातेन देवदूतेन वारिता
न संत्यक्तवती देहं त्वत्सङ्गममनोरथा ३८ परश्व श्च महाभागस्नातुं गङ्गाह्रदं कृता अवतीर्णा विकृष्ट।

स्मिन्हृह नागेन केनचित् ३९ ततोरसातलंनीता तेन तत्र च मे पुरं नागाः सहस्रशास्तस्थुर्नागपत्न्यः कु-
मारकाः ४० तुष्टुवुर्मांसमभ्येत्य मामन्येऽपूजयंस्तथा यथाचिरंस विनयं नागानामसकृत्तथा ॥ ४१॥
प्रसादं कुरु सर्व्वेषां त्वमस्माकं सुतस्त्वया अपराधमुपेतानां संनिवार्य्यो वचोन्मुखः ४२ अपराधं करि-
ष्यन्ति त्वत्सुतस्यानिलाशनाः तन्निमित्तं निवार्य्योऽसौ प्रसादः क्रियतामिति ४३ तथेति च मया-
प्रोक्ते दिव्यैः पाताल भूषणैः भूषिताहं तथा पुष्पैर्गन्धवासोभिरुत्तमैः ४४ समानीता तथा लोकमि-
मन्ते नानिलाशिना पुरायथा कान्तिमती पूर्व्ववद्रूपशालिनी ४५ इति रूपवतीं दृष्ट्वा सर्व्वालङ्कार
भूषितां जग्राह दृढकेशोऽयं हर्त्तुकामः सुदुर्मतिः ४६ युष्मद्बाहुबले नाहं राजपुत्रविमोक्षिता तत्प्र-
सीद महावाहो मां प्रतीच्छ त्वयासमः भूलोके राजपुत्रोऽन्योनास्ति सत्यं ब्रवीम्यहं ४७ इति श्री मार्क-
ण्डेय पुराणे ऽवीक्षित चरिते १२७ मार्कण्डेय उवाच इति तस्या वचः श्रुत्वा स्मृत्वा पितृवचः शुभं ॥
किमिच्छक प्रतिज्ञा ते यदुक्तं तेन भूभृता १ प्रत्युवाचसतांकन्यामवीक्षिन्नृपतेःसुतः सानुरागमनाः
कन्यां त्यक्तभोगाञ्च तत्कृते २ यदाहं त्यक्तवांस्तन्वीं त्वामराति पराजितः विजित्य शत्रून् संप्राप्तस्त्वंम-
यात्र करोमि किं ३ कन्योवाच मम पाणिं गृहाण त्वं रमणीयेऽत्र कानने सकामायाःसकामेन सङ्ग-
मो गुणवान् भवेत् ४ राजपुत्र उवाच एवं भवतु भद्रन्ते विधिरेवात्र कारणं अन्यथा कथमन्यत्र त्वा-
महञ्च समागतः ५ मार्कण्डेय उवाच एतस्मिन्नन्तरे प्राप्तो गन्धर्व्वस्तुनयो मुने वराप्सरोभिः सहितो
गन्धर्व्वैर्वरयैर्वृतः ६ गन्धर्व्व उवाच राजपुत्र सुतेयस्ते भामिनी नाम मानिनी अभिशापादगस्त्यस्य वि-
शाल तनयाऽभवत् ७ बालभावेन योऽगस्त्यः कोपितः क्रीडमानया ततस्तेन तदा शप्ता मानुषी त्वं
भविष्यसि ८ प्रसादितः सचास्माभिर्व्वालेयमविवेकिनी तवापराधाद्द्विप्रर्षे प्रसादः क्रियतामिति ॥
९ प्रसाद्यमानः सोऽस्माभिरिदमाह महामुनिः वालेति मत्वा शापोऽल्पो दत्तोऽस्या नान्यथैव तत् १०
इति शापादगस्त्यस्य विशाल भवने शुभा जातेयं सल्लता सुभ्रूर्भाविनी नाम नामतः ११ तदस्याहं कौ-

ग्नी गृहाणेमां नृपात्मजां  मम्माकाना सुतश्चो ऽत्र चक्रवर्त्ती भविष्यति १२ मार्कण्डेय उवाच  तथेत्युक्तेतित
स्याथ स पाणिं पार्थिवात्मज:  जग्राह विधि वद्धोमं चक्रे तत्र च तुम्बुरु: १३ प्रजगुर्देव गन्धर्व्वा ननृतु श्चाप्सरो-
गणा:  पुष्पवृष्टिं मस मुचुर्मेघा देव वाद्यानि सस्वनु: १४  विवाहे राजपुत्रस्य तथा तत्र समेयुष:  समस्त वसु-
धा त्राण कर्तृ कारण भूतया १५  ततो गन्धर्व्व लोकन्ते सहतेन महात्मना  नि: शेषेण ययु: साच स च राज-
सुता मुने १६  भाविन्या सुकुदे सार्द्धं स वीरसिन्धु पनन्दन:  सा च तेन समं तत्र भोग सम्य क्समन्विता १७ कदा
चिदितिरम्ये ऽसौ नगरे पवने तथा  विक्रीडति समं तन्व्या कदाचिदुप पर्व्वते १८  कदाचित्तु पुलिने नद्या-
हंस सारस शोभिते  कदाचिद्भवन स्यान्ते प्रासादे चाति शोभने १९  विहार देशेष्वन्येषु रमणीये ष्वहर्निशं॥
मरेमे सहित स्तन्व्या सा च तेन महात्मना  २०  भक्ष्यानु लेपनं वस्त्रं स्रक् पानादिक मुत्तमं  उपजह्रुस्त योस्त-
त्र मुनि गन्धर्व्व किन्नरा: २१  तया च रम तस्तस्य भाविन्या सह दुर्लभे  गन्धर्व्व लोके वीरस्य पुत्रं सा सुषुवे शुभा
२२  तस्मिन् जाते महावीर्य्ये गन्धर्व्वाणां महोत्सव:  बभूव मनुज व्याघ्रे तेन कार्य्य मवेक्षतां २३  जगु: केचि
त्तैवान्ये मृदङ्ग पटहानकान्  अवादयन्त चैवान्ये वेणु वीणादिकां स्तथा २४  ननृतु श्च तथा तत्र बहवो-
ऽप्सरसां गणा:  पुष्प वृष्टिं मुचो मेघा जगर्ज्जु र्मृदुनिस्वना: २५  तथा कोलाहले तस्मिन् वर्त्तमाने ऽथ तुम्बुरु:
तु नयेन स्तूतो जात जात कर्म करो न्मुनि: २६  देवा: समाययु: सर्व्वे तथा देवर्षयो ऽमला:  पाताला त्पन्न-
गेन्द्रा श्च शेषवासुकि तक्षका: २७  तथा देवा सुराणाञ्च ये प्रधाना द्विजोत्तम  यक्षाणां गुह्यकानाञ्च-
वायव श्च तथा खिला: २८  तदा ऽऽगतै र शेषर्षि देव दानव पन्नगै:  मुनि भिश्चाकुल मभूत्त गन्धर्व्वाणां म-
हापुरं २९  तत: स तुम्बुरु: कृत्वा जात कर्मादि कीं क्रियां  चक्रे स्वस्त्ययनन्तस्य बालस्य स्तुति पूर्व्वकं ३०
चक्रवर्त्ती महावीर्य्यो महा बाहुर्म्महा बल:  महान्न काल मीशित्व मशेषाया: क्षिते: कुरु ३१  इमे शक्राद
य: सर्व्वे लोक पालास्त थर्षय:  स्वस्ति कुर्व्वन्तु ते वीर वीर्य्यञ्चारि विनाशनं ३२  मरुत्तव शिवाया स्तु-
वाति पूर्व्वो नयो रज:  मरुत्ते विमलो ऽसौ रणो ऽवेष स्याया स्तु दक्षिण: ३३  पश्चिमस्ते मरुद्वीर्य्यं मुत्तमन्ते-

प्रयच्छतु बलं यच्छतु चोत्कर्षं मरुत्त च तथोत्तरः ३४ इति स्वस्त्ययनस्यान्ते वागुवाचाशरीरिणी मरुत्तवे।
ति वक्तु शीयदिदं गुरुरब्रवीत् ३५ मरुत्त इति ते नायं भुवि ख्यातो भविष्यति भुवि चास्य महीपाला यास्य
न्त्याज्ञावशायतः ३६ एष सर्व्व क्षितीशानां वीरः स्थास्यति मूर्द्धनि चक्रवर्त्ती महावीर्य्यः सप्तद्वीपवतीं महीं
३७ आक्रम्य पृथिवीपालानयं भोक्ष्यत्यवारितः प्रधानः पृथिवीशानां भविष्यत्येष यज्विनां आधिक्यं।
शौर्य्यवीर्य्येण भविष्यत्यस्य राजसु ३८ मार्कण्डेय उवाच इत्याकर्ण्य वचः सर्व्वे केनाप्युक्तं दिवौकसां॥
तुतुषुर्विप्र गन्धर्व्वा अस्य माता तथा पिता ३९ इति श्री मार्कण्डेय पुराणे ऽवीक्षित चरिते १२८ मार्कण्डेय
उवाच ततः सराजपुत्रस्तमादायहृ यितं सुतं पद्म्यान्वानुगतो विप्र गन्धर्व्वैर्ययौ पुरं १ स पितुर्भवनं प्रा-
प्य ववन्दे पितुरादरात् चरणौ साच तन्वङ्गी ह्रीमती नृपतेः सुता २ तथाह राजपुत्रो ऽसौ गृहीत्वा बालकं सुतं
धर्म्मासन गते भूपे राज्ञां मध्ये करन्धमं ३ सुखं पौत्रस्य पश्येत दुत्सङ्ग स्थस्य यन्मया किमिच्छके प्रतिज्ञातं।
तुभ्यं मातुः कृते पुरा ४ इत्युक्त्वा पितुरुत्सङ्गे तं कृत्वा तनयं ततः यथा वृत्तमशेषं स कथयामास तस्य तत् ५
स परिष्वज्य तं पौत्र मानन्दास्त्राविलेक्षणः स भाग्यो ऽस्मीत्यथात्मानं प्रशशंस पुनः पुनः ६ ततः सो
ऽर्घ्यादिना सम्यक् गन्धर्व्वान् समुपागतान् सम्मानयामास मुदा विस्मृतान्य प्रयोजनः ७ ततः पुरे महानासी
दानन्दः पौरवेश्मसु अस्माकं सन्ततिर्जाता नाथस्येति महामुने ८ हृष्ट पुष्टे पुरे तस्मिन् गीतवाद्यैर्वराङ्गने
विलासिन्यो ऽनिचाव्वेङ्गन्नत्तुर्लोस्य मुत्तमं ९ राजा च द्विज मुख्येभ्यो रत्नानि च वसूनि च गावो वस्त्राण्य
लङ्कारानददद्धृष्ट मानसः १० ततः स बालो ववृधे शुक्ल पक्षे यथा शशी पित्रोर्ण प्रीति जनको जनस्येष्ट स्व।
सो ऽभवत् ११ आचार्य्याणां सकाशात् स प्राग्वेदान जगृहे मुने ततः शस्त्राण्य शेषाणि धनुर्व्वेदं ततः परं
१२ कृतो द्योगो यदासो ऽभूत खड्ग कार्मुक कर्म्मणि अन्येषुच्च तथा वीरः शस्त्रेषु विजित श्रमः १३ ततो।
ऽस्त्राणि स जग्राह भार्गवाद्भृगु सम्भवात् विनयावनतो विप्र गुरोः प्रीति परायणः १४ गृहीतास्त्रः कृती।
वेदे धनुर्वेदस्य पारगः निष्णातः सर्व्वविद्यासु नवभूव ततः पुरा १५ विशालो ऽपि सुता वार्त्ता सुपलभ्या।

खिलामिमां हर्षनिर्भरचित्तो ऽभूद्दोहित्रस्य च योग्यतां १६ अथ राजा सुतं सुते दृष्ट्वा प्राप्तमनोरथः यज्ञा
ननेकान् निष्पाद्य दत्वा दानानि चार्थिनां १७ कृत्वा शेषक्रियो युक्तः सवर्णो धर्मतो महीं परिपाल्यारि
विजयी बलबुद्धिसमन्वितः १८ सपिया सुवर्णं पुत्रमवीक्षितमभाषत पुत्र वृद्धो ऽस्मि गच्छामि वनं रा-
ज्यं गृहाण मे १९ कृतकृत्यो ऽस्मि नास्त्यन्यत् किञ्चित् त्वदभिषेचनात् सुनिष्पन्नमतो राज्यं त्वं गृह्ण
ण मयार्पितं २० इत्युक्तः पितरं प्राह सो ऽवीक्षिन्नृपनन्दनः प्रश्रयावनतो भूत्वा पिया सुतपसे वनं २१
नाहं तात करिष्यामि पृथिव्याः परिपालनं नापैति व्रीडा मे मनसो राज्ये ऽन्यं त्वं नियोजय २२ तातेन मो-
क्षितो बद्धो न मे वीर्याद् यतः ततः किं पौरुषं मे पुरुषैः पाल्यते मही २३ यो ऽहं न पालना यालमा-
त्मनो ऽपि वसुन्धरां स कथं पालयिष्यामि राज्यमन्यत्र विक्षिप २४ मन्त्री सधर्मः पुरुषो यश्चान्ये-
नावरुह्यते आत्मा ऽमोहाय भवतो वन्धनाद्येन मोक्षितः सो ऽहं कथं भविष्यामि स्त्रीसधर्मा महीप-
तिः २५ पितोवाच न भिन्नमेव पुत्रस्य पिता पुत्रस्तथा पितुः नान्येन मोक्षितो वीर यस्त्वं पित्रा विमो-
क्षितः २६ पुत्र उवाच हृदयं नान्यथा नेतुं मया शक्यं नरेश्वर हृदये व्रीडमेमातीव यस्त्वहं मोक्षितस्त्व
या २७ पित्रोपात्तां श्रियं भुंक्ते पित्रा कृच्छ्रात् समुद्धृतः विज्ञायते च यः पित्रा मा नवः सो ऽस्तु नो कुले
२८ स्वयमर्जित वित्तानां ख्यातिं स्वयमुपेयुषां स्वयं निस्तीर्णकृच्छ्राणां या गतिः सास्तु मे गतिः २९ मार्कण्डेय
उवाच इत्याह बहुशः पित्रा यदा मुक्तो ऽप्यसौ सुत तदा तस्य सुतं राज्ये मरुत्तमकरोन्नृपः ३० स पित्रा
समनुज्ञातं राज्यं प्राप्य पिता महात् चकार सम्यक् सुहृदामानन्दमुपपादयन् ३१ राजा करन्धमश्चापि
वीरामादाय तां तथा वनं जगाम तपसे यतवाक्कायमानसः ३२ तत्र वर्षसहस्रं स तपस्तप्त्वा सुदुश्चरं ॥
विहाय देहं नृपतिः शक्रस्याप सलोकतां ३३ सास्य पत्नी तदा वीरा वर्षाणामभवच्छतं तपश्चचार विप
र्षे जटिला मलपङ्किनी ३४ सालोक्यमिच्छती भर्त्तुः स्वर्गतस्य महात्मनः फलमूलकृताहारा भार्गवा
श्रमसंश्रया द्विजातिपत्नीमध्यस्था द्विजशुश्रूषणा भृता ३५ इति श्री मार्कण्डेय पुराणे मरुत्तचरिते

१२९ क्रौष्टुकिरुवाच भगवन् विस्तरात् सर्व्वं मेतत् कथितं त्वया करन्धमस्य चरितं मवीक्षिच्चरितञ्च यत् १
अवीक्षितस्य नृपते र्मरुत्तस्य महात्मनः श्रोतुमिच्छामि चरितं श्रूयते सोऽतिचेष्टितः २ चक्रवर्त्ती महाभागः
शूरः कान्तो महामतिः धर्म्म विद्धर्म्म कर्म्मैव सम्यक् पालयिता भुवः ३ मार्कण्डेय उवाच सपितामनुज्ञा-
तं राज्यं प्राप्य पितामहात् धर्म्मतः पालयामास पिता पुत्रानिवौरसान् ४ इयाज सुबहून् यज्ञान् यथाव-
त्स्वाप्त दक्षिणान् ऋत्विक् पुरोहितादेश रम्य चित्तो महीपतिः ५ तस्याप्रतिहतं चक्र मासीत् द्वीपेषु सप्त
सु गतिश्चाप्यन विच्छिन्ना खपातालजलादिषु ६ ततः प्राप्य धनं विप्र यथावत्त्व क्रियापरः अयज
त् स महायज्ञे र्देवानिन्द्र पुरोगमान् ७ इतरे च यथा वर्णाः स्वे स्वे कर्म्मणि तत्त्रिताः तद् पात्तधना श्च-
क्रु रिष्टा पूर्त्तादिकाः क्रियाः ८ पाल्यमाना मही तेन मरुत्तेन महात्मना यस्यर्द्धं त्रिदशावासवासि-
भि र्द्विजसत्तम ९ तेनातिशायिताः सर्व्वे केवलं न महीक्षितः यज्विनादेव राजोऽपि शक्त यज्ञाभिसन्धि-
भिः १० ऋत्विक् तस्य तु सम्बर्त्तो बभूवाङ्गिरसः सुतः भ्राता बृहस्पते र्विप्र महात्मा तपसां निधिः ॥११॥
मो वर्णो मुञ्जवान् नाम पर्वतः सुरसेवितः पातितं तेन तच्छृङ्गं हतं तस्य महीपतेः १२ तेन यस्याखि-
लं यज्ञे भूमि भागादिकं द्विज प्रासादा श्च कृताः शुभ्रा स्तपसा सर्व्वकाञ्चनाः १३ गाथा श्चाप्यत्र गाय-
न्ति मरुत्त चरिताश्रयाः सातत्येन धेयः सर्व्वे कुर्व्वन्तोऽध्ययनं यथा १४ मरुत्तेन समो नाभूद्यजमानो
महीतले सदः समस्तं यद्यज्ञे प्रासादा श्चैव काञ्चनाः १५ अमाद्यदिन्द्रः सोमेन दक्षिणाभि र्द्विजात-
विप्राणां परिवेष्टारः शक्राद्या स्त्रिदशोत्तमाः १६ यथा यज्ञे मरुत्तस्य तथा कस्य महीपतेः सुवर्ण म-
खिलं त्यक्तं रत्न पूर्णं गृहे द्विजैः १७ प्रासादादि समस्तञ्च सौवर्णान्नस्य यत्कृतौ त्रयो वर्णा ह्यलभ्य-
न्त तस्मात् केचिन्न धारदुः १८ तस्यैवं कुर्व्वतो राज्यं सम्यक् पालयतः प्रजाः तपस्वी कश्चिदभ्येत्य त-
माह मुनिसत्तम १९ पितुर्म्माता तवाहेदं दृष्ट्वा तापसमण्डलं विषाभिभूत मुरगैर्मदोन्मत्तै र्नरेश्वर ॥२०॥
पितामहस्ते स्वर्यातः सम्यक् सम्पाल्य मेदिनीं तपश्चरणशक्ताऽहमिह चौर्व्वाश्रमे स्थिता २१ साऽहं

पश्यामि वैकल्यं तव राज्यं प्रशासत: पितामहस्य तेनाभूद्यत्त्वं वैयाज्ञ्च ते नृप २२ नूनं प्रमत्तो भोगेषु सक्तो वा ऽविजितेन्द्रिय: चारान्धता यतस्तेषां दुष्टादुष्टं न वेत्सि यत् २३ पातालादभ्युपेतैस्तु भुजगैर्द-न्तशालिभि: दष्टा मुनिसुता: सप्त दूषिताश्च जलाशया: २४ स्वेदमूत्रपुरीषैश्च दूषितञ्च हुतं हवि: अपराधं समुद्दिश्य दत्तो नागबलिश्चिरात् २५ एते समर्था मुनयो भस्मीकर्त्तुं भुजङ्गमान् किन्त्वेषा-न्नाधिकारो ऽत्र त्वमेवात्राधिकारवान् २६ तावन्न सुखं भूपतिजं भोगजं प्राप्यते नृप अभिषेकजलं या-वन्न मूर्द्ध्नि विनिपात्यते २७ कानि मित्राणि क: शत्रुर्मम राज्ञो बलं कियत् को ऽहं के मन्त्रिण: पक्षे के वा भूपतयो मम २८ विरक्तो वा परैर्भिन्न: परेषामपि का दृशा: क: सम्यग्यत्र नगरे विषये वा जनो मम ॥ २९ धर्म्मकर्मार्थी मूढ: क: सम्यगपि वर्त्तते कोदृग्राज्य:परिपाल्य: क: केवो पेक्ष्यो नरो मया ३० सङ्ग-भेदं तथा दस्य देशकालमवेक्षता चारैश्चावार्य्यं हन्यैरज्ञातान् भूपतिश्चरै: ३१ सचिवादिषु सर्व्वेषु। चरान्दद्यान्महीपति: इत्यादौ भूपतिर्नित्यं कर्मणाया सक्तमानम: ३२ नयेद्दिनं तथा रात्रिं न तु भोग। परायण: राज्ञां शरीरग्रहणं न भोगाय महीपते ३३ क्लेशायमहते पृथ्वी स्वधर्म्म परिपालने सम्यक् पालयत: पृथ्वीं स्वधर्म्मञ्च महीपते ३४ इह क्लेशो महान् स्वर्गे परमं सुखमक्षयं तदेतदवबुध्य त्वं हि-त्वा भोगान्नरेश्वर ३५ पालनाय क्षिते: क्लेशमङ्गीकर्त्तुमिहार्हसि इति वृत्त मृषीणां यद्व्यसनं त्वयि। शासति ३६ भुजङ्गहेतुकं भूप चारान्धोनापि वेत्सि तत् बहुनात्र किमुक्तेन दुष्टे दण्डो निपात्यताम् ॥ ३७॥ शिष्टान् पालय राजंस्त्वं धर्म्मषड्भागमाप्स्यसि अरक्षन् पापमखिलं दुष्टेर विनयात्कृतं ३८ समवा प्स्यस्य सन्दिग्धं यदिच्छसि कुरुष्व तत् एतन्मयोक्तं सकलं यत्त वाह पिता महो कुरुष्वैवं स्थिते यत्ते रो चते वसुधाधिप ३९ इति श्री मार्कण्डेय पुराणे मरुत्तचरिते १३० मार्कण्डेय उवाच इति तापस। वाक्यं स श्रुत्वा लज्ज्जा परोन्नृप: धिङ्मां चारान्धमित्युक्त्वा निश्वस्य जगृहे धनु: १ तत: सत्वरितं गत्वा तमौर्व्वस्याश्रमं प्रति ववन्दे शिरसा वीरां मातरं पितुरात्मन: २ ताय सा च यथान्यायं ते चाशीभिरभि

तदस्त्व व्योम पिध्यामि तस्यास्त्व तनयस्यते २४ मार्कण्डेय उवाच ततो गृहीत्वा स धनुर्बाणः सोऽवधात्तम ःः भार्य्यया सहितः प्राप्त स्त्वथवान् मार्गेणाश्रमं २५ इति श्री मार्कण्डेय पुराणे मरुत्त चरिते १३१ मार्कण्डेय उवाच ततुतस्याः सुतं दृष्ट्वा गृहीत वर कार्मुकं धनुः शास्त्र ञ्च तस्याग्रे ज्वाला व्याप्त दिगन्तरं १ उद्गिरन्तं महा वह्निं दीपिता खिल भूतलं पातालान्त र्गतं प्राप्त मसह्यं घोर भीषणं २ सतं दृष्ट्वा महीपालं भृकुटी कुटिलाननं माक्रुध स्त्वं मरुत्ता स्त्व मुपसंह्रियता मिति ३ प्राहासकृत्त त्वरालुप्त वर्णा क्रम मुदारधीः स निशम्य गुरो र्वाक्यं दृष्ट्वा तञ्च पुनः पुनः ४ गृहीत कार्मुकः पित्रोः प्रणिपत्य स गौरवं प्रत्युवाचा पराद्धामे सु भृशं पन्नगाः पितः ५ शासती मां मयि मही परिभूय बलं मम मत्प्राश्रम मुपागम्य दष्टा मुनि कुमारकाः ६ कर्धीरायासां श्रम स्थाना मभीयाम वनीपते मयि शासति दुर्वृत्तै र्दूषितानिह वीं घिच ७ जलाशयास्तथा णेते : सर्व्व एव हि दूषिताः तदत्त्कारणं किञ्चिन्न वक्तव्यं त्वया पितः नानिवार यितव्यो ऽहं ब्रह्मभान प्रति पन्नगान् ८ अवीक्षिरुवाच यद्येभि र्निहता विप्रा यास्यन्ति नरकं मृताः ममैतत्क्रियतां वाक्यं विरमास्त्र प्रयोगतः ९ मरुत्त उवाच नाहमेषां क्षमिष्यामि दुष्टानाम पराधिनां अहमेव गमिष्यामि नरकं यदि पापिनां नलिग्रहे यतास्येवां मां निवारय मा पितः १० अवीक्षि रुवाच मामेते शरणं प्राप्ताः पन्नगा मम गौरवात उपसंह्रियता मस्त्रं सलं कोपेन ते नृप ११ मरुत्त उवाच नाहमेषां क्षमिष्यामि दुष्टानाम पराधिनां स्वधर्म मुल्लङ्घ्य कथं करिष्यामि वचस्तव १२ शास्त्रं निपातयन् दण्डं नृपः शिष्टांश्च पालयन् पुण्य लोकान वाप्नोति नरकं व्याप्य भूमकः १३ मार्कण्डेय उवाच अनं स वदुरुः पिता वार्य्यमाणो यदा सुतः नोपसंहरते सोऽस्त्रं ततो ऽसौ पुनरब्रवीत् १४ हिंसमे पन्नगान् भीतान् ममैतान् शरणंगतान् वार्य्यमाणो ऽपि तस्मात्ते करिष्यामि प्रति क्रियां १५ मत्वाप्य स्त्वास्त्र वाग्नि मत्यसेवो ऽस्त्र विदुषि मनाग्रतः सुदुर्हृन पौरुषञ्च कियत्तव १६ ततः कार्मुक मारोप्य कोपताम्र विलोचनः अवीक्षिरस्त्रं जग्राह कालस्य मुनि पुङ्गवः १७ ततो ज्वाला परीवार मरि संघघ्न मुत्तमं कालास्त्रन्तु महा वीर्य्ययोजयामास कार्मुके

१९ ततश्चुक्षोभ जगती संवर्त्तो स्त्व प्रतापिता साब्धि शैलाखिला विप्र कालस्या स्त्रे समुद्यते १९ मार्कण्डेय उवाच कालास्त्र मुद्यतं पित्रा मरुत्तः सोऽपि वीक्ष्य तत प्राहो च्चैरस्त्र मेनन्के दुष्टशास्ति समुद्यतं २० नत्व इध्याय कालास्त्र मयि मुञ्चति किं भवान् सद्धर्म चारिणि सुते सदेवाज्ञा करं तव २१ मया कार्य्यं महाभाग प्रजानां परिपालनं त्वयेवं क्रियते कस्मान्न इध्याया स्त्र मुद्यतं २२ अवीक्षि रुवाच शरणागत संत्राणं कर्त्तुं व्यसिता वयं तस्य व्याघात कर्त्ता त्वं नमे जीवन् विमोक्ष्यसे २३ मांवा हत्वा स्त्र वीर्य्येण जहि दुष्टानि होरगान् त्वां वा हत्वाऽहमस्त्रेण रक्षिष्यामि महोरगान् २४ धिक् तस्य जीवितं पुंसः शरणार्थिन मागतं योनार्त्तं ननु गृह्णाति वैरि पक्ष मपि ध्रुवं २५ सक्षियोऽहमिमे भीताः शरणं मामुपागताः अपकर्त्ता त्वमेवैषां कथं वध्यो नमे भवान् २६ मरुत्त उवाच मित्रं वा बान्धवो वाऽपि पिता वाथ दिवा गुरुः प्रजापालन विघ्नाय योहन्तव्यः सनृभृता २७ सोहन्ते प्रहरिष्यामि नक्रोद्धव्यं त्वया पितः स्वधर्मः परिपाल्यो मे नमे क्रोधस्त्व वोपरि २८ मार्कण्डेय उवाच ततस्तौ नि श्चितौ दृष्ट्वा परस्पर वधं प्रति समुत्य त्यान्तरे तस्थु र्मुनयो भार्गवादयः २९ ऊचु श्चैनन्न मोक्तव्यं त्वया स्त्रं पितरं प्रति त्वया चनायं हन्तव्यः पुत्रः प्रख्यात चेष्टितः ३० मरुत्त उवाच मया दुष्टा निहन्तव्याः सन्तो रक्ष्याः सही क्षिता इमे च दुष्टा भुजगाः कोऽपराधोऽत्र मे द्विजाः ३१ अवीक्षि रुवाच शरणागत सन्त्राणं मया कार्य्यं मयज्ञ्च मे अपराध्यः सुतो विप्रा यो हन्ति शरणागतान् ३२ ऋषय ऊचुः इमे वदन्ति भुजगा स्त्रा मलोल विलोचनाः संजीवयामस्तान् विप्रान् ये दष्टा दुष्ट पन्नगैः ३३ तदलं विग्रहेणात्र भो राजवर्य्यौ प्रसीदतां उभावपि विनिर्मूढ प्रतिज्ञौ धर्म्मकोविदौ ३४ मार्कण्डेय उवाच सातु वीरा समभ्येत्य पुत्र मेतद भाषत महाख्यादेय ते पुत्रौ हन्तुं नागान् कृतोद्यमः ३५ तन्नियमन्तं यदा विप्रा स्ते जीवन्ति तथा मृताः संजीवन्त श्च मुच्यन्ते यद्युष्मच्छरणागताः ३६ भाविन्युवाच अहमभ्यर्थिता पूर्व्वमेभिः पाताल संश्रयैः तन्निमित्त सर्वं भर्त्ता मयात्र विनियोजितः ३७ तदेतदार्य्य निर्वृत्त मुभयो रपि शोभनं मम भर्तु श्च पुत्रस्य त्वत्त्वोत्र स्यात्सजस्य च ३८

मार्कण्डेय उवाच ततः संजीवयामासुस्तान् विप्रांस्ते भुजङ्गमाः दिव्यैरोषधिजातैश्च विषसंहरणेन च ३९ पित्रोर्ननाम चरणौ स ततो जगतीपतिः मरुत्तश्च मतं प्रीत्या परिष्वज्येदमब्रवीत् ४० मानहा भव शत्रूणां चिरं पालय मेदिनीं पुत्रपौत्रैश्च मोदस्व मा च ते सन्तु विद्विषः ४१ ततो द्विजैरनुज्ञातो वीरयाच नरेश्वरौ समारूढौ रथं सा च भाविनी स्वपुरङ्गता ४२ वीराऽपि कृत्वा सुमहत् तपो धर्मं भृतांवरा भर्तुः सालोकतां प्राप्ता महाभागा पतिव्रता ४३ मरुत्तोऽपि चकारोर्व्यां धर्म्मतः परिपालनं॥ विनिर्जितारिषड्वर्गो भोगांश्च बुभुजे नृपः ४४ तस्य पत्नी महाभागा विदर्भतनया तथा प्रभावती। सुवीरस्य सौवीरी चाभवत् सुता ४५ सुकेशी केतुवीर्य्यस्य मागधस्यात्मजाभवत् सुता च सिन्धुवीर्य्यस्य मद्रराजस्य केकयी ४६ केकयस्य च सैरिन्ध्री सिन्धुभर्तुर्वपुष्मती चेदिराजसुता चाभूद्भार्य्या तस्य सुशोभना ४७ तासां पुत्रास्तस्य चासन् भूभृतोऽष्टादश द्विज तेषां प्रधानो ज्येष्ठश्च नरिष्यन्तः सुतोऽभवत् ४८ एवं वीर्य्यो मरुत्तोऽभून्महाराजो महाबलः तस्याप्रतिहतं चक्रमासीद् द्वीपेषु सप्तसु ४९ यस्य तुल्योऽपरो राजा न भूतो न भविष्यति सत्त्वविक्रमयुक्तस्य राजर्षेरमितौजसः ५० तस्येतच्चरितं श्रुत्वा मरुत्तस्य महात्मनः जन्म चाग्र्यं द्विजश्रेष्ठ मुच्यते सर्व्व किल्विषैः ५१ इति श्रीमार्कण्डेयपुराणे मरुत्तचरितं समाप्तं १३२ क्रौष्टुकिरुवाच मरुत्तचरितं कृत्स्नं भगवन् कथितं त्वया तत्सन्ततिमशेषेण श्रोतुमिच्छा प्रवर्त्तते १ तत्सन्ततौ क्षितीशा ये राज्यार्हा वीर्य्यशालिनः तानहं श्रोतुमिच्छामि त्वयाख्यातान्महामुने २ मार्कण्डेय उवाच नरिष्यन्त इति ख्यातो मरुत्तस्याभवन् सुतः अष्टादशानां पुत्राणां स ज्येष्ठः श्रेष्ठ एव च ३ वर्षाणाञ्च सहस्राणि सप्ततिं दश पञ्च च बुभुजे पृथिवीं कृत्स्नां मरुत्तः क्षत्रियर्षभः ४ कृत्वा राज्यं स्वधर्मेण इष्ट्वा यज्ञाननुत्तमान् नरिष्यन्तं सुतं ज्येष्ठमभिषिच्य ययौ वनं ५ एकाग्रचित्तः स तपस्तप्त्वा तत्र तपो महत् आरुरोह दिवं विप्र यशसाऽऽवृत्य रोदसी॥ ६॥ नरिष्यन्तः सुतः सोऽस्य चिन्तयामास बुद्धिमान् पितुर्वृत्तं समालोक्य तथान्येषाञ्च भूभृतां ७ अत्र।

वंशे महात्मानो राजानो मम पूर्व्वजाः यज्विनो धर्म्मतः पृथ्वीं पालयामासुरूर्जिताः ८ दातारश्चापि वित्तानां वे
ग्रामेष्वनिवर्त्तिनः तेषां कश्चरितं शक्तस्त्वनुयातुं महात्मनां ९ किन्तु तेन कृतं कर्म धर्म्यं साहवनादिभिः तद
हं कर्त्तुमिच्छामि तच्च नास्ति करोमि किं १० धर्म्मतः पाल्यते पृथ्वी को गुणोऽत्र महीपतेः असम्यक्पालनात्
पापी नरेन्द्रो नरकं व्रजेत् ११ सति वित्ते महायज्ञाः कर्त्तव्या एव भूभृता दातव्यञ्चार्थिने वित्तं सीदतामीश्व-
रो गतिः १२ आभिजात्यं तथा लज्जा कोपश्चारिजनाश्रयः कारयन्ति स्वधर्म्मञ्च संग्रामाद पलायनं ॥ १३ ॥
एतत्सर्व्वं यथा सम्यक् पूर्व्वैः पुरुषैः कृतं पित्रा च मे महात्मेन तथा तत्केन शक्यते १४ तदहं किं करिष्यामि
यन्न तैः पूर्व्वजैः कृतं ये यज्विनो वरा दान्ताः संग्रामेष्वनिवर्त्तिनः १५ महत्संग्राम संसर्गो विसंवादित पौ-
रुषाः कर्म्मणाहं यतिष्यामि कस्येत्यानभिशङ्कितः १६ अथवा तैः स्वयं यज्ञाः कृताः पूर्व्वजनेश्वरैः ।
आदिश्य ऋद्धिर्नान्यैस्तु कारितास्तत्करोम्यहं १७ मार्कण्डेय उवाच इति सञ्चिन्त्य यज्ञं स चकार केने-
श्वरः यादृशं न चकारान्यो विनोत्सर्गोऽपि शोभितं १८ द्विजानां जीवनायालं दत्वा तु सुमहाधनं ततः ।
सर्व्वेषां तेषां यज्ञेऽन्नमददन्नृपः १९ गावो वस्त्राणि अलङ्कारं धान्यागारादिकं तथा तथा प्रत्येकं
स तेषां पृथ्वी निवासिनां २० ततस्तेन यथा यज्ञः आरब्धो भूभुजा पुनः आरब्धे समखे यज्ञे ततो नालभत द्वि
जान् २१ यान् यान् वरयति सन्न्यो [illegible] र्त्विज्य कर्म्मणि ते ते तमूचुर्यज्ञाय वयमन्येन दीक्षिताः २२
अन्यं नय यद्दत्तं त्वयास्माकं विवर्ज्जितं तस्मान्नो नास्ति यज्ञेषु दद्यामनुनृपते धनं २३ मार्कण्डेय उवा-
[illegible] न चार्त्विज्ये [illegible] विप्रो [illegible] शेष क्षितीश्वरः [illegible] तदा दानं सदानुमुपचक्रमे २४ तथापि नाह
नैव धनसम्पूर्णा सन्ति ये द्विजाय दातुं भूयोऽसौ निर्विण्ण इदमब्रवीत् २५ अहोऽति शोभनं पृथ्व्यां
द्विजो नाधनः कश्चित् अशोभनञ्च यत्कोशो विफलोऽयमयज्विनः २६ नार्त्विज्यं कुरुते कश्चिद् [illegible]
ऽखिलो जनः द्विजानां न च नो दानं ददतां सम्प्रतीच्छते २७ मार्कण्डेय उवाच ततः कांश्चिद् द्विजान् भक्त्या
प्रणिपत्य पुनः पुनः स्वयज्ञे ऋत्विजश्चक्रे ते प्रचक्रुर्महामखं २८ अत्यद्भुतमिदञ्चापि सीद्दाततस्य मही-

पतेः सयज्ञो ऽभूत्तस्य पृथ्व्यां यजमानो ऽखिलोजनः २९ द्विजन्मनाम यन्नाभीत सदस्य स्तत्र कश्चन यज्ञस्य
नाद्विजाः केचित्तं केचित्ते थान्तु याजकाः ३० नरिष्यन्तो नरपति रियाज स यदा तदा तस्मिन्दातुं ह्येन यागी कृत्स्ना
पृथ्व्या न्यशोषत: ३१ प्राच्यां कोट्य स्तु यज्ञा नामासन्न ष्टा दशाधिकाः प्रतीच्यां सप्त वै कोट्यो दक्षिणा या
चतुर्दश: ३२ उत्तरस्याञ्च पञ्चाशदेक कालं तदा ऽभवन् मुने ब्राह्मणा यज्ञानां नरिष्यन्तो यदे ऽयजत्
३३ एवं स राजा धर्म्मात्मा नरिष्यन्तो ऽभवत् पुरा मरुत्त तनयो विप्रविख्यात बल पौरुषः ३४ इति श्री
मार्कण्डेय पुराणे नरिष्यन्त चरितं १३३ मार्कण्डेय उवाच नरिष्यन्तस्य तनयो दुष्टारिदमनो दमः ॥
शक्रस्येव बलं तस्य दया शीलं मुनेरिव १ बाभ्रव्यासि न्द्रसेनायां स जज्ञे तस्य भूभृतः नव वर्षाणि जठरे-
स्थित्वा जातु र्महा यशाः २ यस्माद्दयामास दमं मात रं जठरे स्थितः दम शील श्च भविता यत श्चायं नृ-
पात्मजः ३ ततस्त्रिकाल विज्ञानः सहितस्य पुरोहितः दम इत्य करोन्नाम नरिष्यन्त सुतस्य तु ॥ ४ ॥

२४।

स दमो राज पुत्र स्तु धनुर्वेद म शेषतः जग्राह नर राजस्य सकाशा द्वृष पर्व्वणः ५ दुन्दुभे र्दैत्य वर्य्यस्य त-
पोवन: निवासिनः सकाशाज्ज गृहे कृत्स्नम स्त्रग्राम ञ्च तत्त्वतः ६ शक्तेः सकाशाद्वेदां श्च वेदाङ्गान्य
खिलानि च तथा र्ष्टिषेणा द्राजर्षे र्जगृहे योग मात्मवान् ७ तं स्व रूपं महात्मानं गृहीता स्त्रं महा बलं
स्वयं वे रेह कृता पित्रा जगृहे सुमना पतिं ८ सुता दशार्णाधिपते र्व्वलिन श्चारु कर्म्मणः पश्यतां सर्व्व भू-
तानां येतदर्थ मुपागताः ९ तस्याञ्च मातुलो ऽभून्मद्र राजस्य वै सुतः सुमना यां महानादो महा बलः
पराक्रमः १० तथा विदर्भाधिपतेः पुत्रः संक्रन्दनस्य च वपुष्मान् राज पुत्र श्च महा धनु रुदारधीः ॥ ११ ॥
ते ऽथ याता हतं दृष्ट्वा दुष्टारि दमनं दमं मन्त्रया मासु रन्यो ऽन्यं तत्रा नङ्ग विमोहिताः १२ एतामस्य बला
त् कन्यां गृहीत्वा रूप शालिनीं गृहं प्रयामस्त स्ये यम स्माकं यं ग्रहिष्यति १३ भर्त्तं बुद्ध्या वरा रोहा स्व-
यम्वर विधानतः तस्येच्छ यानो भविनी भार्य्या धर्मोप पादिता १४ अथ नेच्छति सा कञ्चिद स्मा-
कं मदिरेक्षणा ततस्त स्य भविन्नी सा यो दमं घात यिष्यति १५ मार्कण्डेय उवाच इति ते नि श्चयं

कृत्वा त्र्यः पार्थिवनन्दनाः हृत्तां सु चार्व्वङ्गींद मधार्थ्यानुवर्त्तिनीं १६ ततः केचिन्नृपास्तेषां ये तत्र-
क्षाविचुक्रुशुः चुक्रुशुश्चापरे भूपाः केचिन्मध्यस्थतां गताः १७ ततो दमस्तान् भूपालानवलोक्य सम-
ततः अनाकुलमना वाक्यमिदमाह महामुने १८ दम उवाच भो भूपा धर्म्मकार्य्येषु यद्वदन्ति स्वयम्बरे
अधर्मो वाथवा धर्मो यदेभिर्गृह्यते बलात् १९ यद्यधर्मो नमे कार्य्यं मन्यभार्य्या भविष्यति धर्मो वा-
तद्दलं प्राणोधैरस्यन्ते ऽरिलङ्घने २० ततो दशार्णाधिपतिश्चारुधर्मा नराधिपः निःशब्दं कारयित्वा
तत्सदः प्राह महामुने २१ दमेन यदिदं प्रोक्तं धर्माधर्माश्रितं नृपाः तद्दृष्ट्वं यथा धर्मो ममास्य चनलु-
प्यते २२ मार्कण्डेय उवाच ततः केचिन्महीपालास्तमूचुर्व्वसुधाधिपं परस्परानुरागेण गान्धर्व्वो
विहितो विधिः २३ क्षत्रियाणां परमयं नविट्शूद्रद्विजन्मनां दमनाश्रित्य निष्पन्नः स चास्या दुहितुस्त-
व २४ इति धर्मा दमस्येषा दुहिता तवयार्थिव यो ऽन्यथा वर्त्तते मोहात् कामात्मा सम्प्रवर्त्तते २५ तथा-
ऽपरे तदा प्रोचुर्महात्मानो हि भूभृतां पक्षेये भूभृतो विप्र दशार्णाधिपतेर्व्वचः २६ मोहात् किमाह धर्-
मोऽयं गान्धर्व्वः क्षत्रजन्मनः नत्वेष शस्ता नान्यो हि राक्षसः शस्त्रजीविनां २७ बलादिमां यो हरति
हत्वा तु परिपन्थिनः तस्येवाश्चो राक्षसेन विवाहेनावनीश्वराः २८ प्रधानतर एवो ऽत्र विवाह हितये
मतः क्षत्रियाणामतो धर्म्मो महानन्दादिभिः कृतः २९ मार्कण्डेय उवाच अथ प्रोचुः पुनर्भूपा ये ऽ-
पूर्व्वमुदिता नृपाः परस्परानुरागेण जातिधर्म्माश्रितं वचः ३० सत्यं शस्तो राक्षसो ऽपि क्षत्रियाणां
परो विधिः किन्त्वसो जनकस्याम्ये कुमार्य्यानुमतो वरः ३१ हत्वा तु पितृसम्बन्धं बलेन ह्रियते हि-
या सराक्षसो विधिः प्रोक्तो नान्यभर्त्तृकैरस्थिता ३२ पश्यतां सर्व्वभूपानामनया यद्वृतो दमः गान्ध-
र्व्वस्येहनिष्पत्तौ विवाहो राक्षसो ऽनकः ३३ विवाहितायाः कन्यायाः कन्यात्वं नैव विद्यते कन्याया-
श्च विवाहेन संबन्धः पृथ्वीश्वराः ॥ ३४ तद्दमेये बलादेनां दमादादातुमुद्यताः बलिनस्ते यदि ततः कु-
र्व्वन्तु नतु स शतत ३५ मार्कण्डेय उवाच तत्र श्रुत्वा ऽसौ दमः कोपकषायीकृतलोचनः आरोप

भूमावपातयत् ५७ सपातितस्ततो भूमौ विह्वलाङ्गःसवे पथुः विनिहन्तमतिर्युद्धाद् भूवस्क्षितिपात्मजः ५८
तमालोक्य तथा भूतम युद्ध मति मात्मवान् उत्सृज्यादाय सुमनां सुमनाःप्रययौदम ः ५९ ततो दशार्णाधिपतिः
प्रीति मान करोत्तयोः दमस्य सुमनाया श्च विवाहं विधि पूर्व्वकं ६० कृतदारोदमस्तत्र दशार्णाधिपतेःपुरे
स्थित्वाऽल्पकालं प्रययौ सभार्य्यो निजमन्दिरं ६१ दशार्णाधिपति श्चा सौ दत्त्वा नागां स्तुरङ्गमान् रथा
गोश्वखरोष्ट्रां श्च दासीदासां स्तथा बहून् ६२ वस्त्रालङ्कार चापादि वरोपस्कर मात्मनः अन्यैस्ते श्च तथा
भाण्डैः परिपूर्णां व्यसर्जयत् ६३ इति श्री मार्कण्डेय पुराणे दम चरिते १३४ मार्कण्डेय उवाच ततो
लव्ध्वा तथा पत्नीं सुमनां सुमहामुने प्रणाम्य स पितुः पादौ मातु श्च क्षिति पात्मजः १ साचतौश्वशुरौ
सुभ्रूर्नेनाम सुमना तदा ताभ्यां तौ च तदा विप्र आशी र्भिर भिनान्दितौ २ महोत्सव श्च संजज्ञे नरिष्यन्त
स्य वै पुरे कृतदारे च संप्राप्ते दशार्णाधिपतेः पुरात् ३ सम्बन्धिनं दशार्णेशं जितां श्च पृथिवीश्वरान् ॥
श्रुत्वा पुत्रेण सुसुदे नरिष्यन्तो मही पतिः ४ सोऽपि रेमे सुमनया महाराजसुतो दमः वरोद्यानवनोद्दे-
श प्रासाद गिरि सानुषु ५ अथ कालेन महता रममाणा दमेन सा अवाप गर्भं सुमना दशार्णाधिपतेः
सुता ६ सोऽपि राजा नरिष्यन्तो भुक्त भोगो मही पतिः वयः परिणति प्राप्य दमं राज्येऽभिषिच्य च
७ वनं जगामे न्द्रसेना पत्नी चास्य तपस्विनी वाणप्रस्थ विधानेन स तत्र समतिष्ठत ८ दाक्षिणात्यः
सुदुर्वृत्तः संक्रन्दन सुतो वने वपुष्मान् स मृगान् हन्तुं ययावल्प पदानुगः ९ सते दृष्ट्वा नरिष्यन्तं ताप
सं मल पङ्किनं इन्द्र सेनाञ्च तत्पत्नीं तप साति सुदुर्बलां १० पप्रच्छ कस्त्वं भो विप्रःक्षत्रियो वा वने
चरः वाणप्रस्थ मनुप्राप्तो वैश्यो वा मम कथ्यतां ११ ततो मौन व्रती भूपो न हितस्योत्तरं ददौ इन्द्र
सेना च तत्सर्व्वं मा च ष्टा स्मै यथा तथं १२ मार्कण्डेय उवाच ज्ञात्वा तञ्च नरिष्यन्तं वपुष्मान पितुः
रिपोः प्राप्तोऽस्मीति वदन् कोपात् जटासु परिगृह्य च १३ हाहेति चेन्द्र सेनायां रुदन्त्यां वाष्पगद्गदं
चकर्ष कोपात् खड्गञ्च वाक्यञ्चेद मुवाच ह १४ निर्जितः समरेयेन येन मे सुमना हृता दमस्य तस्य पि-

तं हनिष्येऽवतु तन्दमः १५ येनाखिलं मही पाल पुत्राः कान्यार्थ मागताः अवभूता हनिष्येऽहं पितरं तस्य दुर्म्मतेः १६ यो धनेषु स्वरूपेरा दत्तो यस्य दुरात्मनः सद्दसी वार यत्वेव हान्मि तस्य रिपोर्गुरु १७ मार्कराडेय उवाच इत्युक्त्वा स दुराचारो वपुष्मान वनो पतिः क्रन्दन्त्या सिन्द्रसेनायां शिरश्चिच्छेद तस्य च १८ ततो धिग्धिङ् मुनिजन अन्ये च वनवासिनः तमूचुः स च तं हत्वा जगाम स्वपुरं वनात् १९ गते तस्मिन् विनिश्वस्य सेन्द्रसेना वपुष्मति प्रेषयामास पुत्रस्य समीपं शूद्र तापसं २० गच्छेथा आयुष्मे पुत्रं दमं ब्रूहि वचो मम अभिज्ञो ह्यसि मङ् ते वृत्तान्तं प्रोच्यतेऽत्र किं २१ तथापि वाच्यः पुत्रो मे यद्वक्ष्यति दुःखिता लङ्घनामी ह्यभिमादि लोक्येतो महीपतेः २२ मङ्गत्रोऽधिकतो राजा चतुर्णां परिपालकः त्वमाश्रमाणां किंयुक्तो तापसान् यन्निरीक्षसि २३ भर्त्ता मम नरिव्यन्त स्ता पसस्त परिस्थितः विलपन्त्यास्तथा नाथो यथा नास्ति तथा त्वयि २४ आकृष्य केशेषु बलादपरावं विना ततः हतो व पुष्कता ख्याति मिति ते भूयतिगतः २५ एवं स्थिते तत क्रियतां यथा धर्म्मो न लुप्यते तथा चैनेव वक्तव्य मतोऽस्मत्रापसीह्यहं ॥ २६ ॥ पिता ह्यस्त पस्वी च नापराधेन दूषितः निहतो येन यत्तस्य कर्त्तव्यं तद्धि चिन्त्यतां २७ सन्ति ते मन्त्रिणो वीराः सर्व्वशास्त्रार्थवेदिनः तैः सहालोच्य यत्कार्य्यं मेवम्भूते कुरुष्व तत् २८ नास्माकमधिकारोऽत्र तापसानां नराधिप कुरुष्वे तदितीत्यं त्वमेवं भूपति भाषितं २९ विदूरथस्य जनको यवनेन यथा हतः तथा यत्नव पुत्रस्य कुलन्ते न विनाशितं ३० जम्भस्यासुरराजस्य पिता दष्टो भुजङ्गमैः तेनाप्यखिलपाताल वासिनः पन्नगा हताः ३१ परा शरस्य पितरि शक्तौ च रक्षसाः हते श्रुत्वाऽग्नौ पातितं कार्त्स्नं रक्षसामभवत् कुलं ३२ अन्यस्यापि स्व वंशस्य लङ्घना क्रियते ह्यिया तो नाल क्षत्रियः सोढुं किं पुनः पितृ मारणं ३३ नायं पिता ते निहतो नास्मिन् शास्त्रं निपातितं त्वामत्र निहतं मन्ये त्वयि शास्त्रं निपातितं ३४ बिभेत्यस्य हि कः शास्त्रं न्यस्तं येन वनौकसां तव भूपस्य विप्रस्य मारिते तु बिभेतु वा ३५ तवेयं लङ्घना युक्ता यदस्मिं स्त त्तसा चर वपुष्मति महाराज सम्भृत्य ज्ञाति बान्धवे ३६ मार्कराडेय उवाच इति संक्रा-

न्तसन्देशमिन्द्रसेनं विसृज्य तं पतिं देहमुपालिङ्ग्य विवेशाग्निं मनस्विनी ४० इति श्रीमार्कण्डेय
पुराणे दमचरिते १३५ मार्कण्डेय उवाच तापसेन समाख्यातं दमस्तेन पितुर्वधं क्रोधेनातीव जज्वा-
ल हविषेवाग्निरुद्धतः १ स तु क्रोधाग्निना धीरो दह्यमानो महामुने करं करेण निष्पिष्य वाक्यमेतदु-
वाच ह २ अनाथ इव मे तातो मयि पुत्रे तु जीवति घातितः सुनृशंसेन परिभूय कुलं मम ३ न्यायवा-
दी जने न स्याध्येष लोक्यात् क्षमास्यहं दुष्टेन आक्रोशिष्टानां पालनेऽपि कृतावधं ४ पिता तथापि
निहतो दृष्ट्वा जीवन्ति शत्रवः तत्किं मेऽनेन बहुना हा तातेति पुनः किं पुनः ५ विलापेनात्र यत्कृत्यं तदेवो-
ऽनुकरोम्यहं यदा हं तस्य रक्तेन देहोत्थेन वपुष्मतः न करोमि गुरोस्तत्र सिंचनं देहस्य हुताशने ६ तच्छो-
णितेनोदककर्म तस्य तातस्य संस्थे विनिपातितस्य सैन्यं निहत्य भोजनञ्च न चेत् प्रवेक्ष्यामि हु-
ताशनन्तत् ७ साहाय्यमस्या सुरदेवयक्ष गन्धर्वविद्याधर सिद्धसंघाः कुर्वन्ति चेत्तानपि चास्त्रपू-
गैर्भस्मीकरोम्येष रुषा समेतः ८ निःसृत्य चापानि कामं पुरारस्तं दैत्यादिसाकं समरे निहत्य भोक्ष्ये
ततोऽहं पृथिवीञ्च कृत्स्नां वह्निं प्रवेक्ष्याम्यनिहत्य तं वा ९ सुदुर्मतिं तापसवृद्धमानिनं वनस्थितं शा-
न्तवचो विविग्नं हन्ताहमद्याखिलबन्धुमित्र पदातिहस्त्यश्वबलैः समेतं १० सद्योऽहमादाय धनुः
सखड्गो रथी तथैवाखिलसैन्ययुक्तः कोऽस्मिन् वियत्काननसमस्ताः पश्यन्तु मे देवगणाः समेताः ११ योऽथः
सहायो भविताद्य तस्य मया समेतस्य रणाय भूयः तथैव निःशेषकुलक्षयाय समुद्यतोऽहं निजबाहु
सैन्यः १२ यदि कुलिशकरोऽस्मिन् संयुगे देवराजः पितृपतिरथ चोग्रदण्डमुद्यम्य कोपात् धनपति
वरुणाकौ रक्षितुं तं यतन्ते निशितशरवरौघैर्घातयिष्ये तथापि १३ नियतमतिरदोषः काननाखण्ड
लोको निपतितफलभक्षः सर्वभूतेषु मैत्रः प्रभवति मयि पुत्रे हिंसितो येन तातः पिशितरुधिरतृ-
प्तास्तस्य सन्त्वद्य गृध्राः १४ इति श्रीमार्कण्डेयपुराणे दमचरिते १३६ मार्कण्डेय उवाच दमेन राज्ञा
इत्युक्ते पितुः शत्रुः पलायितः मन्त्रिता तापसोऽन्यत्र तव्यतां निर्भयं महत् १ पलायनपरान् दृष्ट्वा कि-

ञ्चिन्तो क्तं दमेन तान् १ मार्कण्डेय उवाच एतत्तव्वं सुपाख्यानं धर्म्यं स्वर्गा पवर्गदं यः शृणोति पठे द्वापि सिद्धं तस्य समीहितं २ आधि व्याधिज दुःखेन कदाचिन्नाभि युज्यते ब्रह्म हत्यादि पापेभ्यो मुच्य तेनात्र संशयः ३ सन्तः सुजन मित्राणि भवन्ति हित बुद्धयः नाश्यः संभविष्यन्ति दस्य वो वा कदाचन ४ सदयो मिष्ट भोगी च दुर्भिक्षे नावसीदति परदार परद्रव्य पर हिंसादि किल्विषैः ५ मुच्यते ऽनेक दुःखेभ्यो नित्यञ्चैवारगोत्तम ऋद्धि र्वृद्धिः स्मृतिः शान्तिः श्रीः पुष्टिस्तु ष्टिरेव च नित्यं तस्य भवेद्दिप्र यः शृणोति कथामिमां ६ मार्कण्डेय पुराण मेतद खिलं शृण्वन्न शोच्यः पुमान् सोत्रास्य गुणैर्धेत्र समयं श्रोच्योन सो ऽपि द्विज योग ज्ञान विशुद्ध शुद्ध सहितः स्वर्गादि लोके ऽप्यसौ आक्रान्तेश्च सुरादिभिः परिवृतः स्वर्गे सदा पूज्यते ७ पुराण मेतच्छ्रुत्वा च ज्ञान विज्ञान संयुतं विमान वर मारुह्य स्वर्गलोके महीयते ८ इति श्री मार्कण्डेय पुराणं समाप्तं १३७ मार्कण्डेय उवाच इति प्रतिज्ञाय तदा वधन्तस्य दुरात्मनः कोपामर्ष विवृत्ताक्षः सर्व्वे च बल शालिनः हा हतो ऽस्मीति पितरं ध्यात्वा देवं विनिघ्नतान् प्रोवाच मन्त्रिणः सर्वानाति नाथ पुरो हितं दम उवाच यदत्र हात्त्वं तद् ब्रूत तात ग्राह्ने सुरालयं श्रुतं भवद्भिर्यत्प्रोक्तं तेन वृद्ध तपस्विना वृद्ध स्ताप स्वी सन्नृपो वान प्रस्थव्रते स्थितः मौनव्रत धरो ऽशास्त्रो मन्मात्रा चेन्द्र सेनया प्रोक्तः संसृष्ट्या नेन याथा तथ्यं वपुष्मते तेना ऽपि स्वङ्ग मा कृष्य जटां सव्येन पाणिना हत्वा यथा तन्दुष्टात्मा लोक नाथ मनाथवत् माता च संदिश्य च मांधिक् शब्दं व्यर्थ पौरुषं मन्त्रा सारथ्यञ्च निः श्रीकं प्रविष्टा हव्य वाहनं हत्वा पुरस्थ पादातं सैन्यञ्च परी कल्पितं अनिमित्तं पितुर्वैर महत्त्वा पित्त घातकं अकृत्वा तु दचो मातुर्जीवितं किमि होत्सहे मन्त्रिणस्त द्वचः श्रुत्वा हा हेत्युक्ता तदा ऽभवन् हृत वन्तो विमनसः सर्वत्र बल वाहनाः निर्ययुः सपरीवाराः पुरस्कृत्य दमं नृपं गृहीत्वा चाग्निषो विप्राग्नि काल ज्ञात पुरोधसः अहिः राड्विवनि स्वस्य दमः प्रायाद्वपुष्मतं सीमा पालादि सामन्त निघ्नन् याम्यां दिशं त्वरन् सक्रन्दन सुतेनापि दमोज्ञातो वपुष्मता आयातः सपरीवारः सामात्यः सपरिच्छदः

मा॰पु॰
२९८

अकस्मिते न मनसा सैन्या निर्दिदेशाह दूतञ्च प्रेषया मास निर्गम्य नगराद्बहिः त्वं शीघ्रतर मायाच्छ नरि-
ष्यन्तः प्रतीक्षन्ते सभार्य्यः सत्रबन्धो त्वं समायाहि समान्तिकं इतिमद्बाहु निर्मुक्ताः शिता वाणाः पिपासि-
ताः भित्वा शरीरं संग्रामे पास्यन्ति रुधिरं तव श्रुत्वा दमस्तु तत्सर्व्वं दूत प्रोक्तं ययौ त्वरन् स्वहत्वा मतिरां
पूर्व्वोक्तां निश्वसन्नुरगो यथा आहूतः समरे चैव पुमान् सेना विनास्थिना ततो युद्धमभीवासीद्दमस्य च
वपुष्मता रथीच रथिना नागी हस्तिना हयिना हयी अयुध्यन्त च विक्षुब्धं तद्युद्धं तु मुलो ऽभवत पश्य-
तां सर्व्व देवानां सिद्ध गन्धर्व्व रक्षसां चक्रस्येव सुधा प्रक्षन् युध्यमाने दमे युधि [illegible] स्त्व सा
राः सहस्त्र शः ततो दमेन युयुधे सेनाध्यक्षो वपुष्मतः हृदि विव्याध च दमं [illegible] के तस्मि-
न्नि पतिते सैन्यं पलायन परंह्य भूत अस्वामिके ततः प्राह दमः शत्रु दमस्तथा [illegible] आतथि-
त्वा तपस्विनं अत्रास्व ञ्च ततः सैन्यं सन्निधो ऽसि निवर्त्तताम् ततो विवसुः सदमो [illegible] मानुजं ॥
सपुत्रैः सहसं वार्थं बान्धवैर्युयुधे रथी ततः शरासनान्मुक्त वाणो व्याप्तं ततो दिशः दमञ्च सरथञ्चाशुश
रजालैरपूरयत् ततः पितृवधोत्थेन कोपेन स दमस्तथा चिच्छेदास्तोच्छरांस्तेषां विव्याधान्येस्तानपि
एकेनैकेन वाणेन सप्त पुत्रांस्तथा द्विज सम्बन्धि वान्धवा न्मित्रान् निनाय यमसादनं वपुष्मान् सरथी क्रोधा
न्निहतात्मज वान्धवः युयुधे च स तेनाजौ सरथी विबुधो यमः चिच्छेद तस्य तान्वाणान् सदमः प्रत्युवाच
ह युयुधाते च संरब्धौ परस्पर जयैषिणौ परस्पर शराघात विच्छिन्न धनुषौ त्वरन् गृहीत खड्ग सुप्यस्य।
चि क्रीडति वपुष्मति दमः स्पर्गान्नृपं ज्ञात्वा पितरञ्च स्थितं वने केशेष्वाकृष्य चाक्रम्यानिपात्य धरणीत-
ले शिरोधरां यो पादेन भुजमुद्यम्य चाब्रवीत् पश्यन्तु देवताः सर्व्वे मानुषाः पन्नगाः खगाः पाठ्य॰
मानं च हृदयं सत्रबन्धो वपुष्मतः एवमुक्ता च सदमो हृदयञ्च व्यदारयत स्वात्तकाम स्व स्सैरैः स तजेनं
निवारितः ततश्चकार तातस्य रक्तेनैवोदकक्रियां आनृण्यं प्राप्य स पितुः पुनः प्रयात स्वमन्दिरं वपु-
ष्मतश्च मांसेन पिण्डदानं चकारह ब्राह्मणान् भोजयामास रक्षः कुलसमुद्भवान् एवं विधाहि राजानो बभू-

वु: सूर्य्यवंशजा: अन्येऽपि सुधिय: शूराय ज्वान: शास्त्र कोविदा: वेदान्त पदमानी स्तान्न संख्या तु मि-
होत्तमे एतेषां चरितं श्रुत्वा नर: पापै: प्रमुच्यते पक्षिण ऊचु: एव मुक्त्वा जैमिनेयं मार्कण्डेयो महा
मुनि: विसृज्य क्रौष्टुकिं मुनिं चक्रे माध्यान्हिकीं क्रियां अस्माभिश्च श्रुतं यस्माद्यत: प्रोक्तं महामुने॥
अरिणमा स्मिद्ध मे तद्धि पुरा प्रोक्तं स्वयम्भुवा मार्कण्डेयाय मुनये यत्तेऽस्माभि रुदाहृतं पुराणं पवित्रमा
पुण्यं धर्म्मकामार्थसिद्धिदं पठतां शृणवतां मह्य: सर्व पाप प्रमोचनं आदावेव कृता येच प्रश्ना श्चत्वार
एवहि पिता पुत्रस्य सम्वाद स्तथा सृष्टि: स्वयम्भुव: तथा मनूनां स्थितयो राज्ञाञ्च चरितं मुने अस्मा
भिरतत्ते प्रोक्तं किमद्य श्रोतु मिच्छसि एतान् सर्व्वोत्तरान् श्रुत्वा पठित्वा वा शुभानिच विधूय सर्व पापा-
नि ब्रह्मणां चैक्यतां व्रजेत् जैमिनिरुवाच भारते नष्ट सन्देह संशय स्फोटना द्विजा: उक्त वद्भि: कृतं
यत्नं कश्चिदर्थ: करिष्यति यूयं दीर्घायुष: सन्तु: प्रज्ञा बुद्धि विविक्तदा: सांख्ये योगे तथाचास्तु बुद्धि-
रव्यभिचारिणी पितृ शाप कृता दु:खा होस्मिन स्थ व्यपेतुव: एताइत्का वचनं जगाम स्वाश्रमं मुनि:
चिन्तयन् परमोदारं पक्षिणां वाक्य मीरितं इति श्री मार्कण्डेय पुराणं समाप्तं॥१२५॥



## अथ माहात्म्यम्

ब्रह्मोवाच अष्टादश पुराणानि यानि प्राह पितामह: ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा तथा-
न्यं नारदीयञ्च मार्कण्डेयञ्च सप्तमं आग्नेयमष्टमं प्रोक्तं भविष्यं नवमन्तथा दशमं ब्रह्मवैवर्त्तं लैङ्गमे
कादशं स्मृतं वाराहं द्वादशं प्रोक्तं स्कान्द मत्र त्रयोदशं चतुर्दशं वामनञ्च कौर्म्मं पञ्चदशं तथा मात्स्य
ञ्च गारुडञ्चैव ब्रह्माण्डञ्च तत: परं अष्टादश पुराणानां नाम धेयानि य: पठेत् त्रि सन्ध्यं जपतो नित्य
नश्व मेध फलं लभेत् ब्रह्महत्यादि पापानि यान्यन्यान्य शुभानिच तानि सर्वाणि नश्यन्ति तृणं वातह-
तं यथा पुष्करे दानजं पुण्यं श्रवणादस्य जायते सर्ववेदाधिक फलं समाप्या चाधि गच्छति सूद्रेत॰

पूजयेच्छास्त्रं यथा देवं पितामहं गन्धपुष्पैस्तथा वस्त्रैर्ब्राह्मणानाञ्च तर्पणैः यथाशक्त्या च दातव्यं
न्वय यानादि वाहनैः अपूज्य पाठकं तीरं श्लोकमेकञ्च शृण्वतां नासौ पुण्यमवाप्नोति आसं चौरः
स्मृतो हि सः न तस्य वेदाः शीलान्ति पितरो नैव पुत्रकः इतं श्राद्धञ्च नैवास्ति तीर्थस्नानफलं न च अवज्ञया
न श्रोतव्यं शास्त्रमेतद्धि चक्षुषोः पठ्यमाने त्ववज्ञाते साधुभिः शास्त्रमुत्तमे श्रुत्वा तत्पूजयेद्यस्तु पु-
राणां सप्तमं पुनः सर्व्वपापविनिर्मुक्तः पुनात्येव निजं कुलं पूतो याति न सन्देहो विष्णुलोकं सनातनं
पुनः सप्तमनुयावद्धुत्वा भोगान् यथेप्सितान् पृथिव्यां नैव मुक्तो च परं योगमवाप्नुयात् नास्तिकाय
न दातव्यं हृज्ञादि प्रभाविणाय गुरु द्विजाति निन्दाय तथा भग्नव्रताय च माता पित्रोर्निन्दकाय वेदशा-
स्त्रादिनिन्दिने भिन्नमर्य्यादिने चैव तथा वेज्ञाति कोपिने एतेषां नैव दातव्यं प्राणैः कण्ठगतैरपि लो-
भाद्यदि वा मोहाद्भयाद्वापि विशेषतः पठेद्वा पाठयेद्वापि स गच्छेन्नरकं ध्रुवं पुराणं सरसंख्या च प्र-
ख्याता तत्त्वबुद्धिना श्लोकानां षट् सहस्राणि तथा चाष्टशतानि च श्लोकास्तत्र नवाशीति एकादस॰
माहिताः कथिता मुनिना पूर्व्वं मार्कण्डेयेन धीमता इति श्री मार्कण्डेय पुराणे पुराण माहात्म्यं स-
माप्तं मार्कण्डेय उवाच दमेनराजा इत्युक्ते पितुः शत्रुः पलायित इत्यादस्य इति मार्कण्डेय पुराणं
समाप्तः मित्यंतः वंगाल देशीयाचार्य्य संमतः पाठ इति मैथिलाचार्य्येस्तु अस्मिन्पाठे प्रक्षिप्ते मिनि सं-
वाद पूर्त्यांधारक संगत्य भावात् तत्राध्याये नृप दम सम्बंधि युद्धा वर्णनं न च दम प्रज्ञातार्थ प्राकव्या भा-
वाच्च तत्रैव मार्कण्डेय उवाच इति प्रतिज्ञाय तदा वधं तस्य दुरात्मनः इत्यादि लिखित्वा पक्षि जैमिनि-
सम्वाद संगति सहिता ग्रन्थ समाप्ति कृता इति ध्येयम् अतः स्थलद्वये मार्कण्डेय पुराणं समाप्तमित्युक्तम्

# इति

| नामकिताब | नामकिताब | नामकिताब | नामकिताब | नामकिताब | नामकिताब |
|---|---|---|---|---|---|
| १२ हरिवंश पर्व | रामायण का इतिहास | कृपा प्रिया | रागप्रकाश | क़िस्सा गुल व सनोवर | ज्ञानमाला |
| रामायण राम विलास | रामायण मानस दीपिका | विजयमुक्तावली | लावनी | सहस्र रजनी चरित्र | गोपीचंद भरतरी |
| रामायण तुलसीकृत | रामायण कवितावली | अनेकार्थ | शृंगार बत्तीसी | राबिनसन का इतिहास | कथा श्रीगंगा जी |
| रामायण सटीक मय मा- | रामायण गीतावली | छन्दोर्णव पिंगल | **क़िस्सा वग़ैरह** | **वैद्यक** | श्रवण यात्रा |
| नस दीपिका कोश आदि | रामायण गीतावली स- | कविकुलकल्पतरु | नानार्थनो संग्रहावली | निघण्ट भाषा | भरतरी गीत |
| तथा मय तसवीर सटीक | विनयपत्रिका बा-मो- | रसराज | ब्रह्मसार | रस विनोद | दान लीला व नाग लीला |
| तथा जिल्द बंधी | विनय पत्रिका चा-शि- | सतसई सटीक | शिवसिंह सरोज | वैद्यजीवन | दोहावली रत्नावली |
| तथा मोटे अक्षरों की मय | **पुराण** | सतसई | भक्तमाल | औषधिसंग्रह कल्पवल्ली | गोकर्ण माहात्म्य |
| तसवीर | देवी भागवत | सभाविलास | रामाभिषेक नाटक | अमृतसागर | श्री गोपाल सहस्रनाम |
| तथा मय क्षेपक | **वेदान्त** | तुलसी शब्दार्थ | इन्द्रसभा | वैद्यमनोत्सव | कथा सत्यनारायण- |
| रामायण तुलसीकृत के | योगवाशिष्ठ | भजनावली | विक्रमविलास | **ज्योतिष** | हनुमानबाहुक |
| सातों काण्ड | प्रबोधचंद्रोदय नाटक | प्रेमरत्न | बैताल पच्चीसी | जातकचन्द्रिका | जनकपच्चीसी |
| १ बालकाण्ड | **काव्य** | युगलविलास | सिंहासन बत्तीसी | जातकालंकार | आनन्दामृतवर्षिणी |
| २ अयोध्याकाण्ड | सूरसागर | चित्रचन्द्रिका | पद्मावती खण्ड | दैवज्ञाभरण | वनयात्रा |
| ३ आरण्यकाण्ड | कृष्णसागर | बारहमासा बलदेवकृत | शुकबहत्तरी | ज्ञानस्वरोदय | कायस्थवर्ण निर्णय |
| ४ किष्किन्धाकाण्ड | विश्रामसागर | मनोहरलहरी | बकावली सुमन | रमलसार | विहार वृन्दावन |
| ५ सुन्दरकाण्ड | प्रेमसागर | गंगा लहरी | चहार दरवेश | इन्द्रजाल | समरविहार किह्नदल |
| ६ लंकाकाण्ड | व्रजविलास | यमुना लहरी | क़िस्सा हातमताई | **मुतफ़र्रक़ात** | कल्प भाष्य |
| ७ उत्तरकाण्ड | व्रजविलास छोटा | जगद्विनोद | अपूर्व कथा | शनिश्चर की कथा | **दरसी** |
| रामायण शब्दार्थकोष | | **राग** | | | अक्षरावली |

| नामकिताब | नामकिताब | नामकिताब | नामकिताब | नामकिताब | नामकिताब |
|---|---|---|---|---|---|
| स्वयम्बोध | नागरी व कैथी | भोज प्रबन्ध सार | भाषा काव्य संग्रह | अयोध्या कांड | उर्दू कैथी महाजनी |
| ज्ञान चालीसी | | राज नीति | कवितरत्नाकर१भा- | आरण्य कांड | |
| दोहावली | वर्णमाला कैथी१भा- | तथा | तथा २ भाग | किष्किन्धा काण्ड | टिकटकेलासन्सका |
| बालाबोध | तथा २ भाग | भाषालघुव्याकरण | मंगल कोष. | सुन्दर कांड | ऐक्ट २ सन १८७८ई० |
| विद्यार्थीकीप्रथमपु | तथा कैथी फ़ारसी | तथा २ भाग | अंक प्रकाश | लंका कांड | [illegible] |
| किताबजंत्री | नागरी हरूफ़मुफ़र्रदात | भाषा तत्त्व दीपिका | गणितप्रकाश १ भा- | उत्तरकांड | ऐक्टलगान मालगुज़ारी व |
| गणितकामधेनु | अक्षरारम्भ | भाषा चन्द्रोदय | तथा २ भाग | गुटिका | शिमाली१० सन१८७३ई० |
| लीलावती | वर्णप्रकाशिका १भा- | भूगोल तत्त्व | तथा ३ भाग | १ भाग | इंडियन पिनल कोड |
| पटवारियोंकीपुस्तक४भा- | तथा २भाग | भूगोल वर्णन | तथा ४ भाग | २ भाग | मजमूआज़ाबिताफ़ौजदा- |
| | सूरज पुरकीकहानी | इतिहासतिमिरनाशक | गणितक्रिया | ३ भाग | री ऐक्ट १० सन् १८८२ई० |
| सर्रिश्ते तालीमकी | धर्मसिंहका वृत्तांत | १ भाग | क्षेत्र प्रकाश | हिदायतनामामुदर्रिसान | ऐक्टइस्टाम्प १सन१८७९ई० |
| पुस्तकें | शिक्षावली | २ भाग | क्षेत्रचन्द्रिका २भाग | पशुचिकित्सा | ऐक्टरजिस्टरी ३सन१८७७ई० |
| | शिशुबोध | ३ भाग | सकील शायरा | पट्टा बरवत कैथी | ऐक्ट इस्टाम्प अदालत ७ |
| संस्कृत | पत्रहितैषिणी | अवधदेशीय भूगोल | रेखा गणित १ भाग | तथा क़बूलियत | सन् १८७०ई० |
| ऋजुपाठ | पत्र दीपिका | इंगलिस्तान का इतिहास | तथा २ भाग. | रजिस्टर दाख़िलख़ा- | मजमूआ ऐक्ट ... |
| १ भाग | विद्याचक्र | भारतवर्षीय इतिहास | बीजगणित १ भाग | रिज तुलबा मदर्सा | न १९ सन १८६९ई० ... |
| २ भाग | विद्यांकुर | हितोपत्रिका | तथा २भाग | रजिस्टर हाज़िरी पाठशा- | दारी २६ सन १८६१ई० ... |
| ३ भाग | पदार्थ विद्यासार | बाला भूषण | रामायण तुलसी कृत | क़ानून | ऐक्टइस्टाम्प दस्तावेज़ात |
| धात्वराव | पदार्थ ज्ञान विटप | पद्य संग्रह | बालकांड | पटवारियों के क़ायदे | १८ सन् १८६९ई० |